

चन्दमामा सम्पुटः - २२ एप्रिल् - २००५ सञ्चिका - १



## अन्तरङ्गम्



## एतस्य अङ्कस्य विशेषाः














**ग्राहकशुल्कम् -**

अमेरिका-केनडादेशयोः कृते

प्रतिकृतिमूल्यम् - $२

वार्षिकं शुल्कं - $२०

भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -



**Subscription Division**

**CHANDAMAMA INDIA LIMITED**

No. 82, Defence Officers Colony,

Ekkatuthangal, **CHENNAI - 600 097**

E.mail : subscription@chandamama.org



**ग्राहकशुल्कविवरणम्**

वायुयानेन भारतेतरदेशान् प्रति

**वार्षिकं (१२ सञ्चिकाः) - रू.९००/-**

**भारते रू. १४४/- (बुक्पोस्ट् द्वारा)**

भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा

'Chandamama India Limited' नाम्ना प्रेषणीयम् ।



विज्ञापिकादानार्थं सम्पर्क्यताम् -

**चेन्नै** - *शिवाजी*, Ph - 044-22313637/22347399

Fax: 044-22312447, Mobile: 98412-77347

email : advertisements @ chandamama.org

**देहली** - OBEROI MEDIA SERVICES, Telefax (011) 22424184

Mobile: 98100-72961, email: a.s.oberoi@indiatimes.com



*संस्थापकौ* –
**चक्रपाणिः, बि.नागिरेड्डिः च**

# संहतिः कार्यसाधिका

वयं यदि निसर्गं पश्यामः तर्हि अवगच्छामः यत् पशुपक्षिप्रभृतयः सर्वेऽपि जीविनः समूहरूपेण एव जीवन्ति इति । आत्मरक्षणम् एव अत्र कारणम् । मानवः अपि समूहजीवी एव । किन्तु सः समानस्तरीयैः सह जीवति । यथा यथा सः धनसम्पन्नः भवति तथा तथा स्वगणीयैः सहैव वासे रुचिः वर्धते तस्य । किन्तु यदा नैसर्गिकविकोपः दृश्यते, यदा च समाजजीवनम् अपायग्रस्तं भवति तदा सः सर्वेषां विषये चिन्तयति अवश्यम् एव ।

केभ्यश्चित् दिनेभ्यः पूर्वं भारतेन अदृष्टपूर्वा दुरन्तघटना सम्मुखीकृता । तदा समग्रः भारतीयः समाजः प्राणैः वियुक्तेभ्यः अश्रुतर्पणं समार्पयत्, कष्टग्रस्तानां दुःखनिवारणाय सहायहस्तं प्रासारयत् च । सर्वकाराः विविधानि साहाय्यानि अघोषयन् । दूरदर्शन-पत्रिकादयः साहाय्यधनदानाय जनान् अभ्यर्थयन्त । विविधानि सामाजिकानि शैक्षणिकानि च सङ्घटनानि अपायग्रस्तान् प्रदेशान् प्रति स्वस्य कार्यकर्तॄन् अप्रेषयन्, यथाशक्ति साहाय्यम् आचरन् च ।

एतदवसरे भारतेन स्वस्य अखण्डता दर्शिता इति तु विशेषः । अन्येषां देशानां साहाय्यं सविनयं निराकुर्वता भारतेन स्वदेशबान्धवानां साहाय्याय सम्पत्तिः स्वयम् एव सङ्गृहीता । एतत् देशस्य ऐक्यभावं, शक्तिं च निदर्शयति ।

चन्द*मामा* आशास्ते यत् एतत् ऐक्यम् अत्रैव समाप्तं न भवेत् इति । ऐक्यस्य प्रथमं पदं स्यात् एतत् । भाविनि काले एतत् ऐक्यं बलवत्तरं बलवत्तमं च स्यात् । 'संहतिः कार्यसाधिका' इति वचनं न कदाचिदपि विस्मर्तव्यम् अस्माभिः ।

*सम्पादकः* – **विश्वम्**

Visit us at : http://www.chandamama.org



# राजकुमारस्य मूर्खता



राजकुमारः अवदत् - ''मया कुञ्चिका कदापि एकत्र एव न स्थाप्यते स्म'' इति ।

''कस्मिन् दिने कुञ्चिका कुत्र स्थाप्यते इति चोरः कथं ज्ञातवान् स्यात् ?'' इति पृष्टवान् कृष्णकुमारः ।

''स एव प्रश्नः ममापि । विभिन्नेषु स्थानेषु कुञ्चिका स्थापिता चेदपि तत् रहस्यं तेन कथं ज्ञातम् इति तु अभेद्यम् एव अस्ति ।''

''कुञ्चिकास्थापनविषये भवान् केनापि सह किं वार्तालापं कृतवान् आसीत् ?''

''न कदापि ।''

एवं यदा वार्तालापः प्रचलति स्म तदा राजकुमारः अवदत् - ''कुञ्चिका कुत्र स्थापिता इति मया अपि कदाचित् न ज्ञायेत इति भिया अहं कुञ्चिका-स्थापनस्थलं कागदे विलिख्य तत् कागदम् उपधानस्य अधः स्थापयामि स्म'' इति ।

तदा कृष्णकुमारः हस्तेन ललाटं ताडयन् अवदत् - ''अहो, मूर्खता भवतः ! कुञ्चिका रहसि स्थापिता चेदपि किं प्रयोजनं सिद्धम् ? उपधानस्य अधः तु सङ्केतः भवति स्म एव - कुञ्चिका कुत्र अस्ति इति । अतः चोरः विना क्लेशं कुञ्चिकां प्राप्तवान् । चौर्यं च कृतवान् । गहनायां निद्रायां लीनः भवान् चौर्यं सर्वथा न ज्ञातवान् एव'' इति ।

एतत् श्रुत्वा महान्तं खेदं पश्चात्तापं च अनुभूतवान् राजकुमारः ।

कृष्णकुमारः तम् उपदिष्टवान् - ''इतः परं कुञ्चिका कुत्र स्थापिता इत्येतत् रहस्यम् उपधानस्य अधः न स्थापनीयं कदापि । धनस्य सम्पादनाय यावान् श्रमः क्रियते ततोऽपि अधिकः श्रमः करणीयः भवति तस्य रक्षणाय । अन्यथा तत् चोरैः नीयेत एव' इति ।

**चक्रधरशुक्लः**
QTNO - II/1336, अनपरा कालोनी, अनपरा,
सोनभद्रा - २३१ २२५ (उ.प्र.)



# पथिकस्य उपदेशः

सिंहपुरग्रामे लक्ष्मणदासः नाम कश्चन निवसति स्म । तस्य त्रयः पुत्राः, तिस्रः पुत्र्यः च । सर्वेऽपि विवाहिताः सन्तः तस्मिन्नेव ग्रामे सुखेन वसन्ति स्म । 'मम चित्रं कथमपि लेखनीयम्' इति काचन इच्छा आ बहुभ्यः दिनेभ्यः लक्ष्मणदासं पीडयति स्म । किन्तु ग्रामे कोऽपि चित्रकारः न आसीत् इत्यतः तस्य इच्छा न पूर्णा । कदाचित् सः पौत्रं शङ्करं बोधितवान् - 'भवान् चित्रकला-शिक्षणं प्राप्नोतु' इति ।

किन्तु शङ्करः पितामहं स्पष्टतया अवदत् - ''मम चित्रकलायाम् अभिरुचिः नास्ति । अतः अहं चित्रकारः भवितुं न इच्छामि'' इति ।

शङ्करः अष्टादशवर्षीयः जातः । अथ कदाचित् लक्ष्मणदासः रोगेण पीडितः सन् शङ्करम् आहूय - ''वत्स ! अहं मृत्युमुखे अस्मि । मम चित्रलेखनेच्छा तु अपूरिता एव तिष्ठति इति मन्ये'' इति विषादेन अवदत् ।

तदा शङ्करः पितामहं सान्त्वयन् उक्तवान् - ''अहं भवतः इच्छां पूरयिष्यामि । अद्यैव नगरं गत्वा चित्रकारम् आनेष्यामि'' इति ।

शङ्करस्य आश्वासनेन महान्तं सन्तोषम् अनुभूय लक्ष्मणदासः उक्तवान् - ''भवतः निर्णयः उचितः एव । किन्तु एतं विषयं यदि जनाः जानीयुः तर्हि ते - 'अस्मिन् वार्द्धक्ये एतादृशी इच्छा किमर्थम्' इति वदन्तः अपहसेयुः । गृहे वयं त्रिंशत्संख्याकाः स्मः । अस्माकं सर्वेषां चित्रं लेखनीयम् इति भवान् चित्रकारं सूचयतु । तस्मिन् चित्रे ममापि चित्रं सहजतया भवत्येव'' इति ।

ततः शङ्करः नगरं गतः । सः चित्रकाराय शतं रूप्यकाणि देयानि इति चिन्तितवान् । किन्तु चित्रकारस्तु - 'दशसहस्रं रूप्यकाणि दातव्यानि' इत उक्तवान् । 'सर्वेषां चित्राणि लेखनीयानि चेत् एकैकस्य अपि मुखभावः सम्यक् परिशीलनीयः भवति । तदर्थं महान्



एव परिश्रमः वोढव्यः' इति चित्रकारस्य अभिप्रायः। किन्तु तावतः धनस्य दाने शङ्करः न समर्थः। अतः सः सिंहपुरीं प्रतिगन्तुम् इच्छन् ततः प्रस्थितवान्। मध्येमार्गं भाग्यवशात् कश्चन पथिकः दृष्टः तेन।

तस्य पथिकस्य समीपे किञ्चन यन्त्रम् आसीत्। सः यन्त्रस्य उपरि श्वेतवस्त्रं संस्थाप्य मन्त्रोच्चारणं कुर्वन् यत् दृश्यं दृश्यते तस्य चित्रं तस्मिन् वस्त्रे मुद्रयति स्म। चित्रकारैः लिखितस्य चित्रस्य अपेक्षया दृश्यानि सुस्पष्टं सहजं च दृश्यन्ते स्म तत्र।

''अहं भवतः इच्छां ज्ञातवान्। भवतः कुटुम्बस्य चित्रं स्वीकर्तुम् अहम् अस्य यन्त्रस्य उपयोगं करिष्यामि। एतदर्थं भवता पञ्चाशत् रूप्यकाणि दातव्यानि, तावदेव'' इति शङ्करम् उक्तवान् सः पथिकः।

एतत् श्रुत्वा शङ्करः यद्यपि सन्तुष्टः, तथापि कश्चन सन्देहः तस्य मनसि आसीत् एव। तं निग्रहीतुम् असमर्थः सः पृष्टवान् – ''एतादृशं यन्त्रं कुतः भवता प्राप्तम् ?'' इति।

तदा पथिकः सविस्तरम् उक्तवान् – ''मम मातुलः मन्त्रान् तन्त्राणि च जानाति। वर्षात् पूर्वं सः एतत् यन्त्रं निर्मितवान्। अस्माकं कुटुम्बस्य समग्रस्य चित्रमेकं कृतवान् अपि। भवान् तत् पश्यतु'' इति वदन् एकं लघु वस्त्रम् उद्घाट्य दर्शितवान्। तस्मिन् वस्त्रे अनेकेषां चित्राणि स्पष्टतया दृश्यमानानि आसन्। किन्तु तेषु कस्यचित् पुरुषस्य मुखभावः तादृशः आसीत्, यस्य दर्शनेन झटिति हासः उद्गच्छेत्।

''एतादृशं विकाररूपं प्राप्तवान् एषः कः ?'' इति शङ्करः साश्चर्यं पृष्टवान्।

तदा सः पथिकः उच्चैः हसन् – ''अस्य नाम सुरूपः इति। यत् चित्रं मया स्वीक्रियते तस्मिन् एकस्य मुखं एवं विकाररूपेण दृश्यते एव'' इति उक्तवान्।

शङ्करः क्षणं विचिन्त्य पृष्टवान् – ''मम पितामहः समग्रस्य कुटुम्बस्य चित्रं कारयितुम् इच्छति। तस्य इच्छा पूर्णा भवेदेव। तदर्थं यं कमपि त्यागं कर्तुम् अहं सिद्धः। किन्तु मम मनसि भयम् अस्ति यत् चित्रे मम पितामहस्य मुखमेव यदि विकृतं भवेत् तर्हि किं करणीयम् इति'' इति।

''पूर्वमेव भवता अङ्गीक्रियते चेत् चित्रे भवतः मुखमेव विकृतं करिष्यामि'' इति उक्तवान् पथिकः।

ततः उभावपि सिंहपुरीं गतवन्तौ। शङ्करः गृहे स्थितान् सर्वान् अपि तस्य यन्त्रस्य महिमानम्

उक्तवान् । तेन चित्रं कारयितुं सर्वेऽपि उत्सुकाः अभवन् । चित्रग्रहणार्थं सर्वे गृहजनाः उद्याने मिलिताः । सर्वे उत्तमानि वस्त्राणि धृत्वा सिद्धाः आसन् ।

सः पथिकः यन्त्रम् आनीय सर्वेषां पुरतः स्थापितवान् । यन्त्रस्य उपरि तेन एकं श्वेतं वस्त्रं स्थापितम् । नेत्रे निमील्य सः मन्त्रोच्चारणं कृतवान् । ततः नेत्रे उद्घाट्य तत् वस्त्रं शङ्करस्य हस्ते स्थापितवान् । तस्मिन् स्वस्य भावचित्रं दृष्ट्वा शङ्करः बहुधा खिन्नः - 'एतत् भावचित्रं यः कोऽपि यदि पश्येत् तर्हि निश्चयेन हसेत्' इति । तावता तत्र स्थिताः सर्वे अपि स्वस्य भावचित्रं द्रष्टुं त्वरां प्रदर्शितवन्तः । शङ्करः चित्रं तेभ्यः दत्त्वा स्वयं दूरं गतः ।

सः पथिकः शङ्करसमीपम् आगत्य तं सान्त्वयन् अवदत् - ''पितामहस्य इच्छा पूरणीया इति भवतः इच्छा आसीत् । सा तु पूर्णा अस्ति खलु ? यतः भवतः पितामहस्य चित्रं सुन्दरमेव दृश्यते अत्र'' इति ।

''अहं पितामहस्य चित्रं न दृष्टवान् एव । मम चित्रं दृष्टवतः मम मनः नितरां खिन्नम् अभवत् । इदानीं सर्वेऽपि माम् उपहसेयुः'' इति शङ्करः उक्तवान् ।

एतत् श्रुत्वा सः पथिकः उच्चैः हसन् - ''पितामहस्य इच्छां पूरयितुं भवता महान् त्यागः कृतः । किन्तु आश्चर्यस्य विषयः नाम भवान् तस्य पितामहस्य चित्रमेव न दृष्टवान् इति । भवान् स्वस्य एव चित्रं दृष्टवान्, न तु अन्यस्य । इदानीं पश्यतु तत्र'' इति उक्त्वा अन्यान् प्रदर्शितवान् ।

शङ्करः गृहजनान् दृष्टवान् । सर्वेऽपि स्वकीयं भावचित्रं पश्यन्तः आनन्दे निमग्नाः दृष्टाः तेन । तेषु कोऽपि अन्यस्य भावचित्रं द्रष्टुं न उत्सुकः ।

तदा सः पथिकः शङ्करम् अवदत् - ''दृष्टं किल ? कोऽपि अन्यस्य भावचित्रं पश्यन् नास्ति । सर्वे स्वकीयस्य एव चित्रस्य दर्शने संलग्नाः । मनुष्याणां स्वभावः एव एषः । अतः मम भावचित्रं दृष्ट्वा अन्ये माम् उपहसेयुः इति चिन्ता करणीया नास्ति भवता'' इति ।

तस्य वचनेन शङ्करस्य मनः प्रसन्नम् । तदीयः मुखभावः अपि शान्तः जातः । पूर्वं यावत् उक्तम् आसीत् ततोऽपि अधिकं धनं दत्त्वा सन्तोषेण तं पथिकं प्रेषितवान् सः ।





# परिश्रमस्य फलम्

अनन्तरदिने अपि सर्वे बालाः शीघ्रमेव भोजनं समाप्य पितामहीसमीपम् आगत्य – 'कथां कथयतु' इति पीडितवन्तः । पितामही सर्वान् प्रीत्या पश्यन्ती कथाकथनाय उद्युक्ता ।

''बहुभ्यः वर्षेभ्यः पूर्वं सम्पन्ना घटना एषा । गङ्गापुरे रत्नमित्रः नाम कृषिकः कश्चन आसीत् । तस्य अल्पा भूमिः आसीत् । तस्याः कश्चन एव भागः कृषियोग्यः । अवशिष्टे भागे पाषाणाः एव अधिकाः ।

रत्नमित्रस्य उभौ पुत्रौ – माणिक्यः वीरः चेति । यावत् तौ तरुणौ जातौ तावता रत्नमित्रस्य पत्नी दिवं गता ।

रत्नमित्रस्य ज्येष्ठः पुत्रः वीरः महालसः । पित्रा अनेकैः प्रकारैः बोधितं चेदपि सः स्वस्य दुर्गुणं न त्यक्तवान् । प्रतिदिनं काले भोजनम्, ततः ग्रामे अटनम्, पुनः रात्रौ अपि पूर्णोदरं भोजनम्, पुनरपि शयनम् । एवम् आसीत् तस्य दिनचर्या । कनिष्ठः पुत्रः माणिक्यः तु श्रमजीवी । सर्वस्मिन् अपि कार्ये पितुः सहायकः आसीत् सः ।

कानिचन वर्षाणि अतीतानि । रत्नमित्रः महता व्याधिना पीडितः सन् शय्याम् आश्रितवान् । एकस्मिन् दिने सः द्वितीयं पुत्रं माणिक्यम् आहूय दुःखेन उक्तवान् – ''वत्स ! अहं मरणावस्थायाम् अस्मि । भवतः विषये नास्ति मम चिन्ता । परन्तु ज्येष्ठपुत्रस्य विषये महती चिन्ता बाधते माम् । भवता मम काचन इच्छा पूरयितव्या'' इति ।

''वदतु पितः ! भवता यद् उच्यते तत् अवश्यं करिष्यामि'' इति पितरम् उक्तवान् माणिक्यः ।

तदा रत्नमित्रः उक्तवान् – ''भवान् श्रमजीवी अस्ति । परिश्रमं ये कुर्वन्ति ते सर्वदा भगवदनुग्रहपात्रत्वं प्राप्स्यन्ति एव । अतः पाषाणमयीं भूमिं भवान् स्वीकरोतु । मम पूर्णः विश्वासः अस्ति यत् परिश्रमेण भवान् तादृशं क्षेत्रमपि कृषियोग्यं करिष्यति, तेन अधिकं फलमपि प्राप्स्यति इति । इदानीं

कृषियोग्यं क्षेत्रं यदस्ति तत् अग्रजाय ददातु । यावच्छक्यं तस्य साहाय्यमपि करोतु'' इति ।

ततः दिनद्वयाभ्यन्तरे एव रत्नमित्रः मृतः । माणिक्यः पितुः वचनस्य अनुगुणं कृषियोग्यां भूमिम् अग्रजाय दत्तवान् । स्वयं च पाषाणमय्यां भूमौ एकं कुटीरं निर्माय तत्रैव वसन् अहर्निशं महता श्रमेण कार्यम् आरब्धवान् ।



माणिक्यस्य भूम्याः समीपे एव कश्चन आमलकवृक्षः आसीत् । तस्मिन् काचित् देवता निवसति स्म । पाषाणमय्यां भूमौ माणिक्येन क्रियमाणं परिश्रमं दृष्ट्वा सा देवी नितरां दयार्द्रा जाता । ''एतस्य परिश्रमः योग्यफलदायकः भवतु'' इति तम् आशिषा अनुगृहीतवती सा ।

माणिक्यः तां भूमिं कर्षन् तत्र बीजावापम् अपि कृतवान् । यावन्ति बीजानि तेन उप्तानि तानि सर्वाणि अपि धान्यपूर्णानि अभवन् । अग्रजः वीरः स्वेन प्राप्तायां भूमौ कृषिं कर्तुम् अन्यं कञ्चित् नियोज्य ग्रामे वृथा अटन् व्यर्थवार्तालापेन दिनानि यापितवान् । तस्य क्षेत्रे यावती सस्यवृद्धिः जाता ततोऽपि अधिका सस्यवृद्धिः माणिक्यस्य क्षेत्रे दृश्यते स्म ।

एकदा वीरः माणिक्यस्य क्षेत्रस्य समीपं गच्छन् समृद्ध्या शोभमानं माणिक्यस्य क्षेत्रं दृष्टवान् । झटिति एव सः माणिक्यम् आहूय कृत्रिमं प्रेम प्रदर्शयन् उक्तवान् - ''अनुज ! पिता भवते पाषाणमयीं भूमिं यच्छन् महत् अन्याय्यं कृतवान् । एतत् सोढुम् अहं न शक्नोमि । अतः अस्मिन् समये एव आवां क्षेत्रयोः परिवर्तनं करवाव'' इति ।

मम क्षेत्रस्य समृद्धिं दृष्टवतः एतस्य मनसि असूया उत्पन्ना अस्ति इति माणिक्यः ज्ञातवान् एव । तथापि पितुः अन्तिमाम् इच्छां स्मृतवान् सः धान्यैः पूर्णं क्षेत्रम् अग्रजाय दत्तवान् ।

माणिक्यविषये जातम् एतत् अन्याय्यं ग्राममुख्यः भूषणः श्रुतवान् । सः क्रुद्धः सन् वीरम् आनाय्य भर्त्सितवान् - ''वीर ! भवान् अनुजस्य मृदुस्वभावं स्वस्य लाभाय उपयुञ्जानः तस्य विषये महत् अन्याय्यम् एव आचरित-वान् । पुनरपि यदि भवता एवं वञ्चना क्रियेत तर्हि भवान् मया दण्डयिष्यते'' इति ।

भूषणः परेद्यवि स्वयमेव माणिक्यस्य गृहम् आगत्य - ''वत्स ! कुशलं किम् ?'' इति पृच्छन् स्वेन आनीतं तण्डुलं तस्य कुटीरे स्थापयित्वा उक्तवान् - ''माणिक्य ! अहं मम पत्नी च भवन्तं जामातरं कर्तुम् इच्छावः ।

मम पुत्री चन्दना अपि भवन्तं बहु इच्छति ! मम पुत्रीं परिणीय भवान् अस्माकं गृहे एव निवसतु'' इति ।

भूषणस्य वचनं श्रुतवतः माणिक्यस्य नेत्रे अश्रुपूर्णे जाते ! सः सविनयम् उक्तवान् - ''महोदय ! भवतः पुत्र्याः परिणयः मम अपि सम्मतः एव । किन्तु इदानीम् अहमेव पराधीनः । अस्याम् अवस्थायाम् तस्यै एकां शाटिकां दातुमपि अहम् असमर्थः । अतः श्रमेण कार्यं कृत्वा अहं किञ्चित् धनं सम्पाद्य अनन्तरकाले भवत्पुत्रीं परिणेष्यामि'' इति ।

माणिक्यस्य वचनेन भूषणः सन्तुष्टः । देवी अपि माणिक्यस्य विषये अनुग्रहं कृतवती । ततः दिनद्वयानन्तरं तस्य आमलकवृक्षस्य समीपे कार्ये निरतः माणिक्यः सुवर्णपूर्णम् एकं घटं प्राप्तवान् । सः तं घटं भूषणसमीपं नीत्वा सर्वं वृत्तान्तं श्रावितवान् ।

तदा भूषणः महता आनन्देन - ''वत्स ! कापि वनदेवता भवतः परिश्रमजीवनं दृष्ट्वा सन्तोषेण एतम् उपहारं दत्तवती स्यात् । इदानीं भवान् मत्तः आढ्यः अभवत् । मम पुत्रीं परिणेतुम् इदानीं भवतः कापि समस्या न स्यात् खलु'' इति उक्तवान् ।

माणिक्यः स्वसम्मतिं दत्तवान् । अत्र यद् प्रवृत्तं तत्सर्वम् अग्रजेन वीरेण अपि ज्ञातम् । सः स्वस्य दुष्टतां निन्दन् पश्चात्तापदग्धः सन् माणिक्यसमीपं गत्वा उक्तवान् - ''भ्रातः ! परिश्रमेण कीदृशं फलं प्राप्यते इति मया इदानीं ज्ञातम् । भवतः परिश्रमफलम् अपहृत्य मया पापकार्यम् आचरितम् । मम कृषिक्षेत्रम् अपि भवान् एव स्वीकरोतु । अहं भवतः सहायकः सन् कार्यं करिष्यामि'' इति ।

माणिक्यः अग्रजं प्रीत्या आलिङ्ग्य प्रेम्णा उक्तवान् - ''अग्रज ! आवाम् उभौ अपि सम्भूय क्षेत्रे सश्रमं कार्यं करवाव । यत् लप्स्यते तत् विभज्य स्वीकरवाव'' इति ।

एवं कथां परिसमापयन्ती पितामही बालान् उक्तवती - ''बालाः ! भवद्भिरपि इदानीं ज्ञातं स्यात् यत् परिश्रमेण प्राप्तं मधुरं फलं कियत् आनन्दजनकं भवति इति । कार्ये श्रद्धा एव परिश्रमः इति उच्यते'' इति ।

तदा बालाः सर्वे आनन्देन उक्तवन्तः - ''पितामहि ! इतः परं वयमपि श्रद्धया पाठं पठिष्यामः लेखिष्यामश्च'' इति ।





# भल्लूकमान्त्रिकः

## १६

[भल्लूकमान्त्रिकः दुर्मुखराजं क्षान्तवान्, मायामर्कटस्य अन्वेषणाय उद्युक्तः जातः च । अङ्गरक्षकाः उक्तवन्तः यत् मायामर्कटः जीवगुप्तेन सह अस्ति इति । कालीवर्मणा सह भल्लूकमान्त्रिकः तत्र गतवान् । अत्रान्तरे राक्षसः उग्रदण्डः मायामर्कटं लक्ष्यीकृत्य शिलागदां क्षिप्तवान् । किन्तु सा लक्ष्यच्युता जाता । तस्मात् मायामर्कटः अपगतापायः जातः । तदनन्तरम्... ]

मायामर्कटं लक्ष्यीकृत्य क्षिप्ता गदा लक्ष्यच्युता जाता इति ज्ञातवान् उग्रदण्डः नितरां क्रुद्धः । सः पतितां गदाम् उन्नीय पुनरपि मायामर्कटम् उद्दिश्य क्षिप्तवान् । एतदवसरे गदा अश्वस्य शिरसि प्रहारम् अकरोत् । तस्मात् हेषारवं कुर्वन् अश्वः धावन् अपरेण अश्वेन घट्टितः जातः । अपरस्य अश्वस्य उपरि स्थितः भटः भूमौ अपतत् । मायामर्कटः झटिति तम् अश्वम् आरुह्य नगरस्य दिशि तं प्रेरयन् जीवगुप्तम् उद्दिश्य अवदत् - ''जीवगुप्त ! भवतः सर्वविधाः अपि प्रयत्नाः विफलाः जाताः । अहम् इतः चन्द्रशिलानगरं गत्वा राजानं सर्वं निवेदयिष्यामि । नगररक्षणाय यद्यत् करणीयं तत्सर्वं करिष्यामि'' इति ।

दुर्गात् बहिः आगच्छन्तं कालीवर्माणं भल्लूकमान्त्रिकं च दृष्ट्वा जीवगुप्तः नितरां भीतः । यतः तौ तम् अभिलक्ष्य एव आगच्छन्तौ आस्ताम् । अतः सः मायामर्कटम्



उग्रदण्डस्य कथनं श्रुत्वा महतीं भीतिं प्राप्तवान् जीवगुप्तः अश्वं धावनाय प्रेरयन् सैनिकान् उद्दिश्य - ''एषः दुष्टः राक्षसः अस्मान् सर्वान् नाशयेत् इति तु निश्चितम् । अतः ये सजीवं स्थातुम् इच्छन्ति ते माम् अनुसरन्तु नाम'' इति उक्त्वा नगरं प्रति अश्वं धावितवान् ।

एतत् श्रुतवन्तः तत्रत्याः सर्वे सैनिकाः ततः धावनाय उद्युक्ताः जाताः । तावता उग्रदण्डः समीपस्थस्य कस्यचित् अश्वस्य खलीनं गृहीत्वा आकृष्टवान् । तस्मात् तदुपरि उपविष्टः सैनिकः भूमौ अपतत् ।

उग्रदण्डः तं कण्ठे गृहीत्वा उत्थाप्य - ''रे ! हस्तौ पादौ तु न भग्नौ खलु ? अरण्यं प्रति धावतु शीघ्रम् । तदेव रक्षणं दद्यात्, न तु नगरम्'' इति अवदत् ।

अत्रान्तरे कालीवर्मा भल्लूकमान्त्रिकः च तत्र आगतौ । नगरस्य दिशि धावतः सैनिकान् पश्यन् कालीवर्मा अवदत् - ''उग्रदण्ड ! मन्त्रिणः सैनिकानां च गमनं विना विरोधं पश्यन् स्थितवान् भवान् एतं मन्दमतिं सैनिकं गृहीतवान् खलु ? किम् एतेन प्रयोजनम् ? जीवगुप्तस्य गमनम् अवरोद्धव्यम् आसीत् भवता'' इति ।

उग्रदण्डः महतीं निराशतां प्राप्य गदां दूरे क्षिप्त्वा भूमौ उपविशन् अवदत् - ''भल्लूकमान्त्रिक ! मया मायामर्कटस्य मुखात् खेदजनिका वार्ता काचित् श्रुता । सः वदति यत् तान्त्रिकः मिथ्यमिश्रः एव मम अग्रजं मारितवान् इति । किं तस्य वचनं विश्वासार्हं भवितुम् अर्हति ?'' इति ।

अवदत् - ''भोः ! कालीवर्मतः भल्लूकमान्त्रिकतः च नगरस्य रक्षणाय न कोऽपि समर्थः भवेत् । यतः तयोः अलौकिकशक्तिः महत् बलं च अस्ति । अतः मम तु भाति यत् अरण्यं प्रति धावनम् एव वरम् इति'' इति ।

''मन्त्रिन् ! किम् एतत् भीरुतापूर्णं वचनम् उच्यते ? भवान् इव न अहं भीरुः । अहम् अविलम्बेन गत्वा राज्ञा जितकेतुना मिलामि । ततः भल्लूकमान्त्रिकस्य कालीवर्मणः च संहाराय उपायं चिन्तयिष्यामि'' इति उक्त्वा नगरं प्रति अश्वं प्रेरितवान् मायामर्कटः ।

राक्षसः उग्रदण्डः उच्चस्वरेण अवदत् - ''अये मन्त्रिन् ! अहं न भवतां शत्रुः, न वा सूर्यभूपतेः । कालीवर्मणः शिरश्छेदं प्रतिज्ञातवन्तः भवन्तः एव । अतः भवान् दण्डयते एव मया । अश्वात् अवतरतु रे'' इति ।

''भवतः अग्रजस्य नाम किम् ?'' इति अपृच्छत् भल्लूकमान्त्रिकः ।

''कालदण्डः इति तस्य नाम । एतत् नाम किं भवता इतः पूर्वं श्रुतम् ? भवता सूचिते भल्लूकपादपर्वते एव निवसति स्म सः'' इति अवदत् उग्रदण्डः ।

निराकरणपूर्वकं शिरः चालयन् अवदत् भल्लूकमान्त्रिकः - ''सः तान्त्रिकः मम गुरोः संहाराय बद्धकटिः अस्ति । अतः एव यः यः दृश्यते तस्य तस्य साहाय्यं प्राप्तुम् इच्छति सः । कालदण्डनामकस्य नाम इतःपूर्वं मया न श्रुतम् । एषः मायामर्कटः अल्पाम् एव मायाविद्यां जानाति । तस्य वचने विश्वासः सर्वथा न उचितः'' इति ।



उग्रदण्डः क्षणकालस्य चिन्तनस्य अनन्तरम् उत्थाय अवदत् - ''मम अग्रजः इतोऽपि जीवति एव इति दृढतया वदति मदीयम् अन्तरङ्गम् । केभ्यश्चित् वर्षेभ्यः पूर्वं ब्रह्मपुत्र-नदप्रदेशं प्रति आगतेभ्यः तान्त्रिकेभ्यः भीतः सन् अहम् अत्र आगतः । तेषां मन्त्रतन्त्रशक्तिः प्रबला । तस्याः पुरतः मम गदा तृणायते । भवान् वदति यत् मम गुरुः मन्त्रतन्त्रविद्यायां सुनिपुणः इति । अतः अहं भवता सह आगत्य तेषां दुष्टानां संहारकार्ये अवश्यं साहाय्यं करिष्यामि'' इति ।

तस्य वचनं श्रुत्वा सन्तोषं प्रकटयन् भल्लूक-मान्त्रिकः - ''उग्रदण्ड ! अचिरात् एव वयं भल्लूकपादपर्वतं प्राप्स्यामः । इतः निर्गमनात् पूर्वं मायामर्कटतः मया मन्त्रदण्डः वशीकरणीयः, दुष्टः राजा जितकेतुश्च यथा-योग्यं दण्डनीयः च'' इति अवदत् ।

वधकभल्लूकः 'जय भैरव !' इति वदन् गजारूढः सन् चन्द्रशिलानगरं प्रति प्रस्थित-वान् ।

मायामर्कटः वेगेन अश्वं चालयन् चन्द्र-शिलानगरद्वारसमीपम् आगतवान् । तं दृष्ट्वा महत् आश्चर्यम् अनुभवन्तौ तौ रक्षकभटौ परस्परम् उक्तवन्तौ - ''अहो, आश्चर्यम् ! मर्कटः अपि अश्वारोही जातः अस्ति । सर्वथा विश्वासानर्हम् एतत्'' इति ।

ततः तयोः अन्यतरः भटः अश्वस्य गमनं स्थगयन् - ''अये मर्कट ! किं भवान् सम्भाषणम् अपि जानाति ?'' इति पृच्छन् तदीयं पुच्छं गृहीतवान् ।

तदा मायामर्कटः कोपेन कीचकुर्वन् अवदत् - ''अये दुष्टौ ! अहं सामान्यः मर्कटः न । मन्त्रतन्त्रशक्तिमान् भ्रान्तमतिः अस्मि अहम् ।



मम मार्गात् अपसरताम् । महतः अपायात् महाराजः मया रक्षणीयः अस्ति'' इति ।

तदीयं वचनं श्रुत्वा उभौ अपि रक्षकभटौ आश्चर्येण स्तब्धौ । अपरः रक्षकभटः अग्रे गत्वा स्वस्य खड्गाग्रेण मायामर्कटस्य शिरः लक्ष्यीकृत्य - ''भवान् मान्त्रिकः भवतु, तान्त्रिकः वा । किं तेन अस्माकम् ? यत् भवान् वक्तुम् इच्छति तत् अस्मन्नायकस्य पुरतः वदतु कामम्'' इति अवदत्, अश्वस्य खलीनं दृढतया अगृह्णात् च ।

तदा मायामर्कटः स्वस्य मन्त्रदण्डेन रक्षकभटस्य खड्गम् अपसारितवान् । मन्त्रदण्डस्पर्शात् स च खड्गः क्षणाभ्यन्तरे भस्मसात् जातः ।

एतत् दृष्टवन्तौ रक्षकभटौ भीतिं प्राप्य परस्परं मुखं दृष्टवन्तौ । तावता मायामर्कटः - 'जय गुरुवर्य !' इति वदन् अग्रे अगच्छत् ।

प्रवेशद्वारात् अनतिदूरे रक्षकभटप्रमुखः अन्यैः भटैः सह समालोचने मग्नः आसीत् । रक्षकभटयोः उच्चसम्भाषणं तेन श्रुतम् । वेगेन गच्छन् मायामर्कटः अपि तेन दृष्टः । सः झटिति उत्थाय खड्गं हस्तेन गृहीत्वा अश्वस्य दिशि धावन् - ''सर्वे सावधानाः भवन्तु । शत्रुदेशीयः कोऽपि दुष्टः गुप्तचरः अस्मन्नगरं प्रविष्टवान् इति भाति । अतः एव तेन दौष्ट्यम् आचरितम् । तम् अनुसृत्य गत्वा अविलम्बेन बध्नन्तु भवन्तः'' इति ।

रक्षकभटप्रमुखः अश्वम् आरुह्य यावत् ततः प्रस्थितवान् तावता मायामर्कटः राजभवनस्य द्वारसमीपम् आगतवान् आसीत् । तस्मिन् समये राजभवनस्य पुरतः मर्कटक्रीडाप्रदर्शनं प्रचलति स्म । कश्चन मर्कटस्वामी विविधाभिः मर्कटचेष्टाभिः जनान् रञ्जयन् आसीत् ।

अश्वम् आरुह्य आगच्छन्तं मायामर्कटं दृष्ट्वा महान्तं सन्तोषम् अनुभवन्तः करताडनं कुर्वन्तः जनाः अवदन् - ''अहो, एषः मर्कटः सन् अपि अश्वं चालयति । महत् आश्चर्यकरम् एतत्'' इति ।

मर्कटस्वामी मायामर्कटं दृष्ट्वा आश्चर्यम् अनुभवन् - 'एषः मर्कटः सम्यक् प्रशिक्षितः इव भासते । जन्मजाता असाधारणी प्रतिभा अपि अस्ति एतस्य प्रायः । एषः हनूमान् इव देवमानवः स्यादपि । एतस्य द्वारा जनानां मनोरञ्जनं बहुधा कारयितुम् अपि शक्येत । यदि एषः मया कथञ्चित् गृह्येत तर्हि मम महान् लाभः स्यात्' इति स्वगतम् उक्त्वा हस्तस्थं पाशं वेगेन क्षिप्तवान् । स च पाशः

मर्कटस्य कटौ लग्नः । तस्मात् मर्कटः अश्वात् अपतत् । तस्य हस्ते स्थितः मन्त्रदण्डः दूरे पतितः ।

मर्कटस्वामी महता आनन्देन मायामर्कटं स्वसमीपे आकृष्य तस्य कर्णौ गृहीत्वा उन्नीय – ''भोः, एतस्मात् क्षणात् भवतः स्वामी अहम् एव । यदि भवान् मम आदेशं न पालयेत् तर्हि अहं भवतः पुच्छं वस्त्रेण आवरय्य अग्निं योजयिष्यामि । स्मरतु एतत्'' इति अवदत् ।

तदा मायामर्कटः क्रोधेन मर्कटस्वामिनं पश्यन् – ''अये मूर्ख ! अहं सामान्यः मर्कटः न । महाशक्तिशाली मान्त्रिकः अस्मि । भवतः राजा जितकेतुः अपायग्रस्तः अस्ति । तम् अपायं स्मारयितुम् अहम् आगतः अस्मि । मां गृह्णता भवता महान् अविवेकः कृतः । भवतः शिरश्छेदं कारयिष्यामि । मम मन्त्र-दण्डः क्व गतः ?'' इति वदन् बन्धनात् स्वस्य मोचनाय प्रयत्नम् अकरोत् ।

एतत् श्रुत्वा क्षणकालं दिग्भ्रान्तः मर्कट-स्वामी भल्लूकस्य कटौ बद्धां रज्जुम् आकृष्य भल्लूकं प्रेरयन् अवदत् – ''एषः कश्चन विलक्षणः मर्कटः अस्ति । भवान् एव एतस्य निग्रहणे समर्थः । गच्छतु अग्रे ! एतं गृहीत्वा मदधीनं करोतु'' इति ।

भल्लूकः मुखं व्यादाय शब्दं कुर्वन् मर्कटस्य ग्रहणाय निर्गतः । मायामर्कटः उच्चस्वरेण – ''अहं जितकेतोः हितस्य साधनाय अत्र आगतः अस्मि । तं नाशयितुं भल्लूकमान्त्रिकः आगच्छन् अस्ति'' इति वदन् भल्लूकात् आत्मानं रक्षन् हस्तदन्तादिभिः



तस्य पीडनम् अकरोत् ।

तत्र सम्मिलिताः जनाः मायामर्कटस्य वचने अवधानं न दत्तवन्तः । तेन किम् उक्तम् इत्यपि तैः न श्रुतम् । ते परस्परम् अवदन् – ''एषः मर्कटः मानवः इव सम्भाषणम् अपि करोति । भल्लूकमर्कटयोः कलहः नेत्रानन्दकरः अस्ति'' इति ।

अत्रान्तरे अश्वारूढः रक्षकभटप्रमुखः तत्र उपस्थितः । सः कोषात् खड्गम् आकृष्य इतस्ततः चालयन् – ''किम् एतत् प्रवर्तते अत्र ? न एतत् मनोरञ्जनस्थलम् । सर्वे गच्छन्तु इतः'' इति आदिशत् ।

ततः सः मर्कटस्वामिनं पश्यन् अवदत् – ''एषः मर्कटरूपी शत्रुदेशस्य गूढचरः । किम् एतं मारयितुम् इच्छति भवान् ? एषः न मारणीयः, अपि तु कथञ्चित् सजीवं ग्रहीतव्यः । राज्ञः पुरतः एतम् उपस्थापयितुम्

इच्छामि अहम्'' इति ।

रक्षकभटस्य वचनं श्रुत्वा मर्कटस्वामी भल्लूकस्य कण्ठे बद्धां रज्जुम् आकृष्टवान् । मायामर्कटः वेदनामिश्रितं ध्वनिम् उत्पादयन् – ''भवतां राज्ञः रक्षणाय अहम् आगतः अस्मि । पुनः पुनः मया एतत् उच्यते । भवतां राज्ञा महती विपत् सम्मुखीकरणीया अस्ति । शक्तिशाली मान्त्रिकः राक्षसादिभिः सह अत्र आगच्छन् अस्ति । एतम् अंशम् अहम् अविलम्बेन महाराजं वक्तुम् इच्छामि । किन्तु भवन्तः मां वृथा पीडयन्तः सन्ति । भवन्तः स्मरन्तु यत् अहं न सामान्यः इति । महामान्त्रिकस्य शिष्यः अस्मि अहम् । मम मन्त्रदण्डः क्व गतः ?'' इति वदन् मन्त्रदण्डस्य अन्वेषणे उद्युक्तः जातः ।

मायामर्कटस्य वचनं श्रुत्वा क्रोधं प्राप्य रक्षकभटप्रमुखः अवदत् – ''किम् उक्तं भवता ? किं महाराजः एव भवत्समीपम् आगच्छेत् ? अस्माकं महाराजस्य अपमाननं क्रियमाणम् अस्ति भवता । मर्कटस्य कस्यचित् आह्वानं पुरस्कृत्य राज्ञा एव किम् अत्र आगन्तव्यम् ? भवन्तं गृहीत्वा वयं राजसमीपं नेष्यामः । सः एव यथोचितं निर्णयतु'' इति ।

ततः मर्कटस्वामिनं पश्यन् सः अवदत् – ''भोः, भल्लूकं भवान् आदिशतु यत् एषः मर्कटः ग्रहीतव्यः इति । मर्कटरूपिणं गुप्तचरम् एतं राजसमीपं नयाम वयम्'' इति ।

स्वामिनः आज्ञायाः अनुगुणं भल्लूकः मायामर्कटं गृहीत्वा स्कन्धे आरोप्य स्वस्य स्वामिनम् अनुसरन् राजभवनं प्रति प्रस्थितवान् । जनाः महत् मनोरञ्जनं प्राप्नुवन्तः तान् अनुसृतवन्तः ।

मायामर्कटः आकाशं पश्यन् – ''भोः, तान्त्रिकगुरुवर्य ! एतदवसरे भवान् एव मम रक्षकः'' इति उक्त्वा स्वगतम् अवदत् – ''एते मां महाराजसमीपं नयन्तः सन्ति यत् तत् युक्तम् एव । अहम् अपि राजानम् एव द्रष्टुम् इच्छामि । मन्त्रदण्डः यदि प्राप्येत तर्हि एकाकी सन् अपि अहं राजानं दुष्टेभ्यः रक्षितुं शक्नुयाम् । मम मन्त्रदण्डः क्व गतः ?'' इति ।

– *(अनुवर्तते)*



# वेताल-कथा

## रसराजः रसिकराजः च

यदि अहं स्वीकृतात् कार्यात् विरतः स्यां तर्हि वेतालः माम् प्रहसेत् इति चिन्तयन् इव त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा वृक्षशाखायां लम्बमानं शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानं प्रति प्रस्थित-वान् । तदा शवान्तर्गतः वेतालः अवदत् – ''अये राजन् ! सर्वे राजानः चिन्तयन्ति यत् मम निर्णयः एव अत्युत्कृष्टः इति. । पूर्वं रसराजनामकस्य कवेः विषये राजा वीराङ्गः अपि एवमेव चिन्तितवान् आसीत् । किं वीराङ्गेण इव एव भवता अपि मम निर्णयः अपरिवर्त्यः इति भाव्यते ? किम् एतादृशेन निरर्थकेन व्यवहारेण ? भवतः मार्गायासपरिहाराय वीराङ्गस्य कथां



श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

वीराङ्कः सिन्दूरदेशस्य राजा । काव्य-श्रवणे तस्य विशेषरुचिः । सः विजय-दशमीदिने कवीन् निमन्त्र्य सम्मानयति स्म । श्रेष्ठः कविः कः इति निर्णयाय सः महा-मन्त्रिणं वदति स्म - आस्थानकवीनां साहाय्येन निर्णीयताम् इति । तदनुगुणम् एव मन्त्री निर्णयति स्म ।

किन्तु राज्ञः मनसि भावः भवति स्म - सम्मानितानां कवीनां काव्यानि अत्युत्कृष्टानि न सन्ति इति । आस्थानकवयः अपि वदन्ति स्म यत् सम्मान्यमानानां काव्यानि नीरसानि इति । वस्तुतः तु तेषां मनसि भीतिः आसीत् यत् समर्थः कविः यदि उत्तमकवित्वेन चीयेत तर्हि वयं पदच्युताः स्याम इति । अतः एव ते सामान्यप्रतिभावतः एव चयनं कुर्वन्ति स्म ।

द्वित्राणां वर्षाणाम् अनन्तरं कदाचित् राजा मन्त्रिणम् आहूय अवदत् - ''अस्माकं देशे काव्यस्तरः प्रतिदिनं क्षीयमाणः इव दृश्यते । एतस्य कारणं किम् ?'' इति ।

''प्रभो! अस्माकम् आस्थानकवीनां यादृशं सामर्थ्यं तादृशं प्रायः अन्यस्य कस्यचिदपि न भवति । भवता यत् सम्माननं क्रियते ततः नूतनानां प्रोत्साहमात्रं भवितुम् अर्हति, न तु उत्कृष्टसाहित्यस्य प्राप्तिः'' इति अवदत् मन्त्री ।

एतत् श्रुतवतः राज्ञः चिन्ता अधिका जाता । एतस्मिन् एव विषये चिन्तयन् सः अन्तःपुरं गतवान् । तत्र सः राज्ञीं स्वस्य समस्यां निवेद्य अवदत् - ''सारहीनानां काव्यानां प्रोत्साहनं, तद्रचयितॄणां सम्माननं च व्यर्थम् एव खलु ?'' इति ।

तदा राज्ञी निराकरणपूर्वकं शिरः चालयन्ती अवदत् - ''सहस्राधिकानि वर्षाणि अतीतानि चेत् किं सूर्यस्य किरणाः कान्तिहीनाः भवन्ति ? यदि ते कान्तिहीनाः भवेयुः तर्हि अपि तत् किम् अस्माभिः ज्ञायेत ? मम तु भाति यत् महाकवयः सदापि लोके भवन्ति एव इति । तेषां योग्यतां केचन एव ज्ञातुम् अर्हन्ति'' इति ।

''भवत्याः वचनानि अलङ्कारपूर्णानि सन्ति । भवती एवं रमणीयतया वक्तुम् अर्हति इति अहम् अद्यावधि न जानामि स्म । देशस्य महकवीनाम् अभिज्ञाने अहम् असमर्थः जातः इति तु सत्यम् एव । सर्वादौ मया भवत्याः एव सम्माननं करणीयम्''

इति अवदत् राजा ।

तदा राज्ञी अवदत् - ''यदि मया उक्तानि वचनानि उत्कृष्टानि इति भवान् चिन्तयति तर्हि भवता मम परिचारिकायाः नीलायाः सम्माननं करणीयं स्यात् । यतः एतानि वाक्यानि तदीयानि'' इति ।

एतता श्रुत्वा राजा अवदत् - ''मम देशे स्थिता काचित् परिचारिका अपि एवम् उत्कृष्टतया भावं प्रकाशयितुम् अर्हति इति तु अभिमानास्पदविषयः । सा कस्मिन् प्रसङ्गे एतानि वाक्यानि उक्तवती ?'' इति ।

''दिनद्वयात् पूर्वं कदाचित् अहं ताम् अवदं यत् यथा यथा वयः अतीतं भवति तथा तथा मम सौन्दर्यं क्षीयते इति । तदा मम कथनं निराकुर्वती सा सूर्यस्य तेजस्कताम् उदाहृत्य अवदत् यत् सूर्यस्य निस्तेजस्कता जायेत चेदपि सा सामान्यैः तु न ज्ञायते इति'' इति अवदत् राज्ञी ।

वीराङ्गः नीलाम् आनाय्य तस्याः प्रशंसां बहुधा कृतवान् । तदा सा अवदत् - ''प्रभो ! यदि कमलस्य श्रेष्ठता तर्हि न तत्र पङ्कस्य किमपि पात्रम् । कमलं यद्यपि सृष्टिकर्तुः आसनं, तथापि तस्य सृष्टिकर्तृता तु नास्ति । ब्रह्मा चतुरः अपि वेदान् जानाति, तथापि न तस्य पूजायोग्यता । एवमेव मया कानिचन उत्कृष्टानि वचनानि उक्तानि इति तु सत्यमेव चेदपि प्रशंसार्हता तु मम नास्ति । कश्चन महाकविः आ मासात् मम गृहे निवसति । मया यानि वचनानि उक्तानि तानि सर्वाणि तस्यैव मुखात् निर्गतानि'' इति ।

एतत् श्रुत्वा राजा अवदत् - ''एवं तर्हि



सः रसराजः न केवलं कविः, अपि तु महापण्डितः अपि । भवती तं वदतु यत् अहं मेलितुम् इच्छामि इति'' इति ।

नीला रसराजं राज्ञः सन्देशं श्रावितवती । तदा रसराजः हसन् अवदत् - ''राजानं भवती वदतु यत् तदीयः सन्देशः प्राप्तः इति । मम कर्णौ यदा चलनसमर्थौ भवतः तदा अहं तेन मेलिष्यामि'' इति ।

नीला कवेः सन्देशं यदा महाराजं श्रावितवती तदा राज्ञी पार्श्वे एव आसीत् । कविना किं सन्दिष्टम् इति तया न अवगतम् । तदा राजा ताम् अवदत् - ''रसराजः मम सन्देशं श्रुतवान् । किन्तु सः मत्समीपं स्वयम् आगन्तुं न इच्छति । मया तत्समीपं गत्वा आस्थानं प्रति सः निमन्त्रणीयः'' इति । ततः सः नीलाम् अवदत् - ''अहं कदा मेलितुम्



अर्हामि इति तं पृष्ट्वा मां वदतु'' इति ।

नीला यदा राज्ञः वचनं श्रावितवती तदा रसराजः अवदत् - ''दिने अहं काव्यं लिखन् भवामि । रात्रौ च जनान् काव्यं श्रावयामि । अतः राज्ञः मेलनाय मम समीपे समयः एव नास्ति । भवती एतम् अंशं राजानं वदतु'' इति ।

नीलामुखात् कवेः सन्देशं श्रुत्वा राजा कुपितः । ''श्वः एव सः मया मिलेत् । एताम् आज्ञां तं वदतु भवती'' इति क्रोधेन अवदत् सः ।

नीलामुखात् राज्ञः आज्ञां श्रुत्वा रसराजः अवदत् - ''यम् इच्छामि तेन मेलितुम् अर्हामि अहम् । तादृशं स्वातन्त्र्यम् अस्ति एव मम । एतत् राजा यदि अपहर्तुम् इच्छेत्, मां च अपराधिनं भावयेत्, तर्हि सः दुष्टः भवेत् । राजा अन्याय्ये प्रवर्तेत इति तु दौर्भाग्याय एव'' इति ।

रसराजः एतादृशम् उत्तरं दद्यात् इति राजा न निरीक्षितवान् आसीत् एव । सः रसराजस्य उत्तरं श्रुत्वा क्षणकालं स्तब्धतया स्थितवान् । ततः सः नीलाम् अपृच्छत् - ''इदानीं किं करणीयम् इति भवत्याः अभिप्रायः ?'' इति ।

तदा नीला अवदत् - ''प्रभो ! रसराजः रात्रौ प्रतिदिनं काव्यं श्रावयति । भवान् तु रसिकराजः । यदि भवान् रात्रौ वेषान्तरं धृत्वा मम गृहम् आगत्य रसराजस्य काव्यं शृणुयात् तर्हि वरं स्यात्'' इति ।

राजा एतं प्रस्तावम् अङ्गीकृतवान् । सामान्यजनवेषं धृत्वा सः नीलायाः गृहं गतवान् । रसराजस्य काव्यं श्रुत्वा राजा मन्त्रमुग्धः जातः । काव्यपठनस्य अन्ते रसराजः श्रोतॄणां प्रश्नानाम् उत्तराणि अपि अवदत् । एतस्मात् राजा अवगतवान् यत् एषः महापण्डितः अपि इति । किञ्चिदनन्तरं किमपि प्रष्टुम् इच्छन् राजा उत्थितवान् । किन्तु सङ्कोचवशात् इव मौनेन अतिष्ठत् ।

एतत् दृष्ट्वा रसराजः अवदत् - ''किमर्थं सङ्कोचः ? निस्सङ्कोचं प्रश्नः क्रियताम्'' इति ।

''अस्माकं राजा वीराङ्गः श्रेष्ठानां कवीनां सम्माननं करोति । भवतः काव्यम् असदृशम् अस्ति । तथापि भवता राज-सत्कारः न प्राप्तः । एतस्य कारणं किम् इति किं भवान् वक्तुं शक्नुयात् ?'' इति अपृच्छत् राजा ।

''मम काव्यं सम्मानार्हं न इति राजा चिन्तितवान् स्यात्'' इति अवदत् रसराजः ।

''अस्माकं राज्ञा भवतः काव्यं न श्रुतम् एव । अतः यदि भवान् सकृत् तेन मिलेत् तर्हि वरं स्यात्'' इति उक्तवान् राजा ।

तदा रसराजः हसन् अवदत् - ''सम्मान-प्राप्तीच्छा यदि मयि बलवती स्यात् तर्हि अहम् अवश्यं राजसमीपं गच्छेयम् । इदानीं तु तथा नास्ति । राजा एव श्रेष्ठस्य कवेः सम्माननं कर्तुम् इच्छति । अतः स एव कवेः समीपं यदि गच्छेत् तर्हि तदेव भूषणम्'' इति ।

एतत् उत्तरं श्रुत्वा तत्रत्याः सर्वे हसितवन्तः । वीराङ्गस्य मुखं विच्छायं जातम् । सः क्षीणस्वरेण अवदत् - ''राजा बहुषु शासन-कार्येषु व्यापृतः भवति । अतः भवान् स्वयं यदि तत्समीपं गच्छेत् तर्हि तदेव युक्तिसङ्गतं स्यात्'' इति ।

''कार्यबाहुल्ये व्यापृतः राजा कथं वा श्रेष्ठं कविम् अभिज्ञातुं शक्नुयात् ?'' इति प्रतिप्रश्नं कृतवान् रसराजः ।

''एतद्विषये मन्त्रिप्रभृतयः साहाय्यं कर्तुम् अर्हन्ति । अतः भवान् तैः मिलतु'' इति अवदत् राजा ।

''मया मन्त्रिप्रभृतयः द्रष्टव्याः, 'अहं महाकविः अस्मि, मम सम्माननं क्रियताम्' इति ते प्रार्थनीयाः च इति खलु भवतः आशयः ? प्रार्थनया प्राप्तं दानस्वीकार-तुल्यम् । राजा सम्मानं दानं भावयति । श्रेष्ठः कविः दानं न इच्छति, प्रत्युत सम्मानम् । यदि भवान् मम अभिमानी स्यात् तर्हि



दानरूपं सम्माननं मया न प्राप्तम् इति सन्तोषम् एव अनुभवेत्'' इति अवदत् रसराजः ।

राजा विना प्रतिवचनं ततः निर्गतवान् । अनन्तरदिने सः महामन्त्रिणम् अवदत् - ''राज्ञ्याः परिचारिकायाः नीलायाः गृहे रसराजः नाम महाकविः अतिथित्वेन वसति इति श्रूयते । भवान् आस्थानकविभिः सह गत्वा तस्य प्रतिभा कीदृशी इति ज्ञात्वा प्रत्यागत्य वदतु'' इति ।

महामन्त्री आस्थानकवयः च राज्ञः आदेशं पालितवन्तः । ततः प्रत्यागत्य महा-मन्त्री राजानम् अवदत् - ''प्रभो ! आस्थान-कवयः अभिप्रयन्ति यत् रसराजस्य काव्ये विशेषः कोऽपि नास्ति इति । सः राज-सम्मानार्हः सर्वथा न इति तेषाम् अभि-प्रायः'' इति ।

महामन्त्रिणः वचनं श्रुत्वा कोपं प्राप्य अपि राजा कथञ्चित् तं निगृह्य - ''रस-राजस्य काव्यं मया स्वयं श्रुतम् अस्ति । नितरां श्रेष्ठं तत्'' इति वदन् प्रवृत्तं सर्वं निवेदितवान् । तदा आस्थानकवयः महतीं लज्जां प्राप्य शिरः अवनमय्य स्थितवन्तः, राजानं क्षमां प्रार्थितवन्तः च ।

राजा प्रश्नार्थकदृष्ट्या महामन्त्रिणः मुखम् अपश्यत् । तदा मन्त्री विनयेन अवदत् - ''मया सदा आस्थानकवीनां वचनेषु विश्वासः कृतः । ते एवं परमस्वार्थिनः सन्ति इति मया सर्वथा न अवगतम्'' इति ।

मन्त्रिणः वचनं श्रुत्वा प्रतिवचनं किमपि अवदन् राजा अन्तःपुरं प्रति गतवान् । तत्र नीला राज्ञीं वदन्ती आसीत् - ''महाराज्ञि ! रसराजः महाराजस्य दर्शनम् इच्छति । एतदर्थम् अनुमतिं प्राप्य आगच्छतु इति सः माम् उक्तवान् अस्ति'' इति ।

तदा राजा अवदत् - ''अहं स्वयं गत्वा तम् आस्थानं प्रति निमन्त्रयिष्यामि'' इति । एतेन राज्ञी नितराम् आश्चर्यान्विता जाता ।

वेतालः एवं कथां समाप्य अवदत् - ''राजन् ! सर्वस्य परिशीलनात् ज्ञायते यत् रसराजः गर्वोपेतः इति । सः सम्माननयोग्यः स्यात् नाम । तथापि तस्य एतादृशः अहङ्कारपूर्णः व्यवहारः किम् उचितः ? सः निमन्त्रणीयः इति राज्ञा किमर्थं निर्णीतम् ? रसराजस्य सम्माननात् अहङ्कारस्य पोषणं कृतं न भवति किम् ? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः अवदत् - ''रसराजः स्वाभिमानी, न तु दुरहङ्कारी । तस्य एका एव इच्छा आसीत् यत् आस्थानकवीनां कुतन्त्रं प्रकाशनीयं, वस्तुस्थितिश्च ज्ञापनीया इति । सम्माननं नाम दानं न इति तेन यत् उक्तं तत् युक्तम् एव । तस्य वचनस्य युक्तताम् अव-गतवान् राजा निश्चितवान् यत् मया स्वयं गत्वा कवेः निमन्त्रणं करणीयं, तदेव युक्तम् इति । वीराङ्कः न केवलं राजा, अपि तु रसिकराजः अपि'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः वेतालः ततः अदृश्यतां गतः सन् वृक्षस्य शाखाम् अवलम्बितवान् ।






## जुडी भवति केरलमूलम्



'कलरिपयट्टु' इत्येषा केरलीया समरकला काचित् । एतस्याः प्रभावः अत्रत्येषु विविधेषु नृत्यप्रकारेषु बहुधा द्रष्टुं शक्यः । 'कथक्कलि'नामकः नृत्यप्रकारः एतस्य एकम् उदाहरणम् । कोलकलिः, वेलकलिः, यात्राकलिः इत्यादयः एतत्प्रभावयुक्ताः अन्ये केचन नृत्यप्रकाराः । पञ्चमे शतके बोधिधर्मनायकः बौद्धसंन्यासी कलरिपयट्टु-कौशलं चीनदेशं प्रति नीतवान् । सः शियोंलिन्मन्दिरे एतत् जनान् अबोधयत् । गच्छता कालेन कलरिपयट्टुतः एव जुडो, कराटे, कुङ्गफु इत्यादीनि विविधानि आत्मरक्षणतन्त्राणि उत्पन्नानि इति श्रूयते ।

## अपरः अलेक्साण्डरः

ग्रीक्जनैः क्रि. पू. ३२७ तमे वर्षे भारतस्य उपरि आक्रमणं कृतम् इति वयं जानीमः एव । ततः सहस्रवर्षाणाम् अनन्तरं, तन्नाम १२९० तमे क्रिस्ताब्दे, खाजीसुलतानः देहलीं शासितवान् । सः आत्मानम् अपरम् अलेक्साण्डरं निर्दिशति स्म । खाजी-वंशीयेषु तृतीयः अलावुदीनः समर्थतमः आसीत् । सः गुजरातं मालवादेशं च स्वायत्तीकृतवान्, चित्तूरुदुर्गं रन्थाम्बोर-दुर्गं च वशीकृतवान् । एतेन जयेन सः इस्कन्दर-इ-सानी इति ख्यातिं प्राप्तवान् । एतेन एव बिरुदा युक्तानि सुवर्णनाणकानि अपि तेन टङ्कितानि ।



महामन्त्रिणः वचनं श्रुत्वा कोपं प्राप्य अपि राजा कथञ्चित् तं निगृह्य - ''रस-राजस्य काव्यं मया स्वयं श्रुतम् अस्ति । नितरां श्रेष्ठं तत्'' इति वदन् प्रवृत्तं सर्वं निवेदितवान् । तदा आस्थानकवयः महतीं लज्जां प्राप्य शिरः अवनमय्य स्थितवन्तः, राजानं क्षमां प्रार्थितवन्तः च ।

राजा प्रश्नार्थकदृष्ट्या महामन्त्रिणः मुखम् अपश्यत् । तदा मन्त्री विनयेन अवदत् - ''मया सदा आस्थानकवीनां वचनेषु विश्वासः कृतः । ते एवं परमस्वार्थिनः सन्ति इति मया सर्वथा न अवगतम्'' इति ।

मन्त्रिणः वचनं श्रुत्वा प्रतिवचनं किमपि अवदन् राजा अन्तःपुरं प्रति गतवान् । तत्र नीला राज्ञीं वदन्ती आसीत् - ''महाराज्ञि ! रसराजः महाराजस्य दर्शनम् इच्छति । एतदर्थम् अनुमतिं प्राप्य आगच्छतु इति सः माम् उक्तवान् अस्ति'' इति ।

तदा राजा अवदत् - ''अहं स्वयं गत्वा तम् आस्थानं प्रति निमन्त्रयिष्यामि'' इति । एतेन राज्ञी नितराम् आश्चर्यान्विता जाता ।

वेतालः एवं कथां समाप्य अवदत् - ''राजन् ! सर्वस्य परिशीलनात् ज्ञायते यत् रसराजः गर्वोपेतः इति । सः सम्माननयोग्यः स्यात् नाम । तथापि तस्य एतादृशः अहङ्कारपूर्णः व्यवहारः किम् उचितः ? सः निमन्त्रणीयः इति राज्ञा किमर्थं निर्णीतम् ? रसराजस्य सम्माननात् अहङ्कारस्य पोषणं कृतं न भवति किम् ? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः अवदत् - ''रसराजः स्वाभिमानी, न तु दुरहङ्कारी । तस्य एका एव इच्छा आसीत् यत् आस्थानकवीनां कुतन्त्रं प्रकाशनीयं, वस्तुस्थितिश्च ज्ञापनीया इति । सम्माननं नाम दानं न इति तेन यत् उक्तं तत् युक्तम् एव । तस्य वचनस्य युक्तताम् अव-गतवान् राजा निश्चितवान् यत् मया स्वयं गत्वा कवेः निमन्त्रणं करणीयं, तदेव युक्तम् इति । वीराङ्कः न केवलं राजा, अपि तु रसिकराजः अपि'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः वेतालः ततः अदृश्यतां गतः सन् वृक्षस्य शाखाम् अवलम्बितवान् ।






## जुडी भवति केरलमूलम्



'कलरिपयट्टु' इत्येषा केरलीया समरकला काचित् । एतस्याः प्रभावः अत्रत्येषु विविधेषु नृत्यप्रकारेषु बहुधा द्रष्टुं शक्यः । 'कथक्कलि'नामकः नृत्यप्रकारः एतस्य एकम् उदाहरणम् । कोलकलिः, वेलकलिः, यात्राकलिः इत्यादयः एतत्प्रभावयुक्ताः अन्ये केचन नृत्यप्रकाराः । पञ्चमे शतके बोधिधर्मनायकः बौद्धसंन्यासी कलरिपयट्टु-कौशलं चीनदेशं प्रति नीतवान् । सः शियोंलिन्मन्दिरे एतत् जनान् अबोधयत् । गच्छता कालेन कलरिपयट्टुतः एव जुडो, कराटे, कुङ्गफु इत्यादीनि विविधानि आत्मरक्षणतन्त्राणि उत्पन्नानि इति श्रूयते ।

## अपरः अलेक्साण्डरः

ग्रीक्जनैः क्रि. पू. ३२७ तमे वर्षे भारतस्य उपरि आक्रमणं कृतम् इति वयं जानीमः एव । ततः सहस्रवर्षाणाम् अनन्तरं, तन्नाम १२९० तमे क्रिस्ताब्दे, खाजीसुलतानः देहलीं शासितवान् । सः आत्मानम् अपरम् अलेक्साण्डरं निर्दिशति स्म । खाजी-वंशीयेषु तृतीयः अलावुदीनः समर्थतमः आसीत् । सः गुजरातं मालवादेशं च स्वायत्तीकृतवान्, चित्तूरुदुर्गं रन्थाम्बोर-दुर्गं च वशीकृतवान् । एतेन जयेन सः इस्कन्दर-इ-सानी इति ख्यातिं प्राप्त-वान् । एतेन एव बिरुदा युक्तानि सुवर्णनाणकानि अपि तेन टङ्कितानि ।



*अन्यदेशीयकथावली (बेबिलोनियादेशीया)*

# आहारसेवी भगवान्

राज्ञः प्रासादात् अनतिदूरे एव आसीत् कश्चन पर्वतः । तस्य शिखरे किञ्चन मन्दिरम् आसीत् । सः राज्यस्य प्रमुखः देवालयः । जनानां विश्वासः आसीत् यत् मन्दिरस्थः देवः सजीवः अस्ति इति । भक्तैः अर्पितं नैवेद्यं खादति स्म देवः । प्रतिदिनं सायङ्कालस्य पूजायाः अनन्तरं देवस्य पुरतः नैवेद्यरूपेण विविधान् स्वादून् आहार-पदार्थान् संस्थाप्य अर्चकः मन्दिरं दृढतया कीलयति स्म । अनन्तरदिने प्रातः एव तस्य द्वारस्य उद्घाटनम् । प्रातः द्वारस्य उद्घाटनावसरे कदाचित् धनिकगृहीयाः भवन्ति स्म । पुनः कदाचित् राजा स्वयमपि उपस्थितः भवति स्म । यदा द्वारम् उद्घाट्यते तदा नैवेद्यपात्राणि रिक्तानि दृश्यन्ते स्म । अस्वादवः पदार्थाः अल्पप्रमाणेन सेविताः दृश्यन्ते स्म ।



देवाय यत् नैवेद्यरूपेण अर्प्यते तस्य सज्जीकरणाय राजप्रासादे विशेषपाकविभागः एव आसीत् । नैवेद्यस्य भूयान् भागः अत्रैव सज्जीकृतः भवति स्म । कदाचित् अन्ये अपि नैवेद्यरूपेण किमपि अर्पयन्ति स्म ।

एतस्य कौतुकस्य दर्शनाय अन्यदेशीयाः बहवः जनाः तदा तदा एतद्देशम् आगच्छन्ति स्म । अत्रत्यं सर्वं दृष्ट्वा ते वदन्ति स्म - ''अहो, सौभाग्यम् एतस्य देशस्य राज्ञः यत् सजीवः देवः एव एतस्मिन् देशे तिष्ठति'' इति ।

कदाचित् अर्चकः राजानं वदति स्म - अद्य देवः अमुकं पाकविशेषम् इच्छति इति । तदा राजा विशेषपाकशालीयान् आज्ञापयति स्म यत् देवस्य इच्छायाः अनुगुणम् अवधानपूर्वकं विशिष्टः पाकः क्रियताम् इति ।

कदाचित् डेनियलः नाम कश्चन बुद्धिमान् तरुणः यदा राज्ञा सह सम्भाषमाणः आसीत् तदा देवालयस्य अर्चकः महाराजसमीपम् आगत्य अवदत् - '' महाराज ! अहम् एकान्ते

किञ्चित् निवेदयितुम् इच्छामि'' इति । तदवसरे डेनियलराजयोः सम्भाषणं प्रचलत् आसीत् । अतः एकान्तगृहं गन्तुम् अनिच्छन् राजा अर्चकम् अवदत् - ''यत् वक्तव्यं तत् अत्रैव उच्यतां नाम । विश्वासपात्रस्य एतस्य जनस्य पुरतः उक्तम् अन्यत्र न गच्छति'' इति । किन्तु अर्चकः तत्र किमपि वक्तुं न ऐच्छत् । एकान्ते एव वक्तव्यम् इति तस्य प्रबला इच्छा । अतः राजा तम् एकान्तप्रकोष्ठं प्रति नीतवान् । किञ्चित्-कालानन्तरं प्रत्यागत्य सः डेनियलम् अवदत् - ''तेन अर्चकेन विशिष्टं किमपि न उक्तम् । आवयोः सम्भाषणे वृथा विच्छेदः कल्पितः तेन'' इति ।



''महाराज ! तेन अर्चकेन उक्तं विशिष्टं यदि न स्यात् तर्हि तत् माम् अपि वदतु, यदि आक्षेपः न स्यात्'' इति अवदत् डेनियलः ।

''अद्य देवाय नैवेद्यत्वेन अधिकः आहारः प्रेषणीयः इति एतावत् एव तेन उक्तम्'' इति अवदत् राजा ।

''तेन एतादृशम् एव किमपि उक्तं स्यात् इति ऊहितम् आसीत् मया'' इति हसन् अवदत् डेनियलः ।

तदा राजा आश्चर्येण अपृच्छत् - ''कथं भवता एवम् ऊहितम् ?'' इति । अन्येषां मनसः अवगमने डेनियलस्य विशेषसामर्थ्यम् अस्ति इति तु राजा जानाति स्म एव । किन्तु अर्चकस्य मनसि यत् अस्ति तदपि एषः ऊहितुं शक्नुयात् इत्यत्र तस्य सन्देहः आसीत् ।

''महाराज ! यत् अहं जानामि तत् यदि वदेयं तर्हि भवतः, असंख्यानां भक्तानां च मनः खिन्नं भवेत् । अतः अहम् एतद्विषये अधिकं किमपि वक्तुं न इच्छामि । क्षन्तव्यः अहम्'' इति गाम्भीर्येण अवदत् डेनियलः ।

एतस्य श्रवणात् राज्ञः कुतूहलं प्रवृद्धम् । सः सानुरोधम् अवदत् यत् यावत् ज्ञायते तावत् भवता वक्तव्यम् एव इति ।

तदा डेनियलः अवदत् - ''श्वः प्रातः सर्वं वदिष्यामि । किन्तु एतदर्थं काचित् अनुज्ञा आवश्यकी मम । अहम् अद्य मन्दिरस्य द्वारस्य पिधानात् पूर्वं मूर्तिं परितः त्रिवारं भ्रमणं कर्तुम् इच्छामि'' इति । राजा ससन्तोषम् एव एतं प्रस्तावम् अङ्गीकृतवान् ।

द्वारपिधानात् पूर्वं मूर्तिं परितः डेनियलस्य सञ्चारम् अर्चकः न इच्छति स्म । किन्तु राज्ञा एव अनुज्ञातम् आसीत् इत्यतः असहायकतया सः एतत् अङ्गीकृतवान् ।



रात्रौ डेनियलराजयोः उपस्थितौ एव मन्दिरस्य द्वारं कीलितम् । ततः राजा अवदत् - ''देवेन यत् इष्टं तत् मम पाचकैः महता श्रमेण श्रद्धया च सज्जीकृतम् अस्ति । एतस्मात् देवः नितरां सन्तुष्टः भवेत् । एतस्य सज्जीकरणे निरताः पाचकाः अद्य मम निमित्तं विशेषपाकं सज्जीकर्तुं समयं न प्राप्तवन्तः एव'' इति ।

''हा हन्त ! अर्चकस्य तद्बान्धवानां च सन्तोषाय भवता स्वसन्तोषः त्यक्तव्यः अभवत् यत् तत् तु खेदाय'' इति अवदत् डेनियलः ।

''कदाचित् बुद्धिमन्तः अपि जनाः वक्तुः आशयं सम्यक् अवगन्तुं न शक्नुवन्ति लोके । अत्रापि तथैव प्रवृत्तम् । अर्चकस्य तद्बान्धवानां च निमित्तं स्वसन्तोषः परित्यक्तः इति मया न उक्तम् एव । देवाय विशेषपाकं सज्जीकर्तुं गताः मम पाचकाः मन्निमित्तं विशेषपाकं सज्जीकर्तुं न शक्तवन्तः इत्येतावत् एव मया उक्तम्'' इति अवदत् राजा ।

डेनियलः प्रतिवचनं किमपि अवदन् मन्दहासमात्रं प्रकटितवान् ।

अनन्तरदिने प्रातःकाले राज्ञः, डेनियलस्य, अन्येषां केषाञ्चि् आस्थानिकानां च पुरतः एव मन्दिरस्य द्वारम् उद्घाटितम् । पूर्वदिने नैवेद्यरूपेण समर्पितानां विशेषपाकपदार्थानां पात्रं रिक्तं दृश्यते स्म तत्र । अन्यैः कैश्चित् अर्पितानां नैवेद्यानां पात्रात् किञ्चित् स्वीकृतं दृश्यते स्म । ये पूर्वदिने नैवेद्यम् अर्पितवन्तः आसन् ते आस्थानिकाः खेदेन अवदन् - ''हा हन्त ! वयं यत् समर्पितवन्तः तत् भगवतः इष्टाय न जातम् । दौर्भाग्यवन्तः वयम्'' इति ।

एतत् श्रुत्वा डेनियलः पुनरपि हसितवान् । तदा राजा असन्तोषेण अवदत् - ''मित्र ! यत् ह्यः भवता उक्तं तत् इदानीं विशदीकरणीयम् । अन्यथा भवान् मया दण्ड्येत'' इति ।

''महाराज ! शिलामयी प्रतिमा काचित् किं कदाचित् नैवेद्यं सेवेत ? देवः प्रतिमायां निवसन् मानवः इव व्यवहरन् अधिकप्रमाणेन आहारम् अपेक्षितवान् इत्यत्र किं विश्वसिति भवान् ?'' इति अपृच्छत् डेनियलः ।

''डेनियल ! अपि विवेकः परिभ्रष्टः

भवतः? नैवेद्यस्य स्वादुतरः भागः देवेन सेवितः इति तु स्पष्टम् । किं देवस्य अपमाननं क्रियते भवता ?'' इति क्रोधेन पृष्टवान् राजा ।

''देवस्य अपमाननं मम उद्देशः सर्वथा न । देवस्य नाम्ना यः दुराचारः प्रचलति तत् न सहे अहम् । एकं दीपं गृहीत्वा भवान् मया सह आगच्छतु । देवमूर्तेः पृष्ठभागं गच्छाव आवाम् । तत्र अन्धकारः अस्ति'' इति वदन् डेनियलः दीपहस्तेन राज्ञा सह देवस्य गर्भगृहं प्रविष्टवान् । मूर्तेः पृष्ठभागे श्वेतचूर्णं पातितं दृष्टम् । तत्र केषाञ्चित् कानिचन पदयुगल-चिह्नानि अस्पष्टतया दृष्टानि । तानि अनुसृतानि ताभ्याम् । अन्धकारबहुले भागे भित्तौ किञ्चन अपसारणयोग्यं शिलाफलकं दृष्टम् । सूक्ष्म-दर्शनात् एव तस्य स्थितिः ज्ञातुं शक्या आसीत् । तस्याः भित्तेः अपरपार्श्वे आसीत् अर्चकस्य गृहम् ।

''अहो, किम् एतत् सर्वम् ?'' इति महता आश्चर्येण अवदत् राजा ।

''महाराज ! एतेन मार्गेण आगत्य अर्चकः तद्गृहसदस्याः च प्रतिदिनम् आहारं सेवन्ते स्म । ह्यः तस्य गृहं प्रति जामातृप्रभृतयः बान्धवाः आगताः इति अहं जानामि स्म । अतिथीनां कृते अधिकः आहारः आवश्यकः एव खलु ? ह्यः रात्रौ अहं मूर्तिं परितः भ्रमन् जागरूकतया चूर्णं पातितवान् आसम् । भवता यानि पदचिह्नानि अत्र दृष्टानि तानि अर्चक-तत्परिवारबान्धवानाम् एव'' इति विवृतवान् डेनियलः ।

एतत् श्रुत्वा राजा क्षणकालं स्तब्धः । ततः सः अर्चकस्य बन्धनाय आदेशं कृत-वान् । यतः अपराधिनः अपराधः सप्रमाणं ज्ञातः आसीत् तेन ।

''अहो आश्चर्यम् ! देवनाम्ना एवं वञ्चना-व्यवहारः प्रचलेत् इति स्वप्ने अपि न ऊहितम् आसीत् मया'' इति अवदत् राजा ।

''महाराज ! मूर्खवञ्चकादिभिः वयं यावत् पीडिताः भवामः ततोऽपि अधिकतया पीडितः भवति भगवान् । किन्तु अत्र तस्य सङ्कल्पः कः इति तु न ज्ञायते । यदा योग्यः समयः प्राप्यते तदा एव सत्यं प्रकाशितं भवति'' इति अवदत् डेनियलः ।



# वार्ताविशेषः



## प्रतिमायाः संरक्षणम्

कन्याकुमार्याः समुद्रे स्थितायां शिलायाम् उपविश्य स्वामी विवेकानन्दः ध्यानम् अकरोत् । अतः समुद्रेण परिवृतायाः तस्याः उपरि विवेकानन्दस्मारकं निर्मितम् अस्ति अद्य । ततः अनतिदूरे एव स्थितायाः अन्यस्याः शिलायाः उपरि तमिलुनाडुसर्वकारेण प्रसिद्धस्य तिरुक्कुरुल्ग्रन्थस्य रचयितुः महात्मनः तिरुवल्लुवरवर्यस्य प्रतिमा प्रतिष्ठापिता अस्ति । निसर्गाघातस्य निवारणाय एषु दिनेषु निर्णीतं यत् १३३ पादौन्नत्ययुता पञ्चवर्षीया एषा प्रतिमा संरक्षकद्रव्येण लेपनीया इति । २७ लक्षरूप्यकैः चतुर्मासाभ्यन्तरे एतत् लेपनकार्यं निरूढम् अस्ति सर्वकारेण । इदानीं सार्वजनिकाः यथापूर्वं तां प्रतिमां द्रष्टुम् अर्हन्ति ।

## ३८ तमः प्रयत्नः

स्काट्ल्याण्ड्देशीयः राबर्ट्ब्रूसः ब्रिटिश्जनैः सप्तवारं पराजितः सन्नपि गुहायां कस्याञ्चित् पौनःपुन्येन प्रयतमानम् ऊर्णनाभं दृष्ट्वा प्रेरणां प्राप्तवान् इत्येषा कथा अस्माभिः सर्वैः प्रायः ज्ञायते एव । तत्सदृशः ततोऽपि अधिकयत्नशीलः वा अस्ति राजस्थानीयः शिवधवनयादवः, यश्च प्रायः 'आधुनिकः राबर्ट्ब्रूसः' इति निर्देशम् अर्हति । सः ३७ वारं दशमकक्ष्यापरीक्षां लिखितवान् । किन्तु कदापि साफल्यं तु न प्राप्तम् । अतः सः अग्रिमे एप्रिल्मासे प्रवर्तिष्यमाणायाः परीक्षायाः निमित्तं पुनरपि शुल्कं दत्तवान् अस्ति । यदा सः प्रथमवारम् एतां परीक्षां लिखितवान् तदा तदीयौ पितरौ निश्चितवन्तौ आस्तां यत् परीक्षायाः उत्तरणस्य अनन्तरम् अष्टादशवर्षीयस्य एतस्य विवाहः निर्वर्तनीयः इति । तत् तु न सम्पन्नम् एव । इदानीं ५६ वर्षीयः सः अविवाहितः एव तिष्ठति ।



## तमिळुनाडुराज्यीया जानपदकथा

# बुद्धिमती स्नुषा

रामनाथपुरस्य महाधनिकः स्वस्य पुत्रस्य नाम कृतवान् भाग्यनाथः इति । धनिकस्य इच्छा आसीत् यत् मम पुत्रः मदीयायाः अपारायाः सम्पत्तेः उत्तराधिकारी स्यात् इति । किन्तु नियतेः निर्णयः अन्यः एव आसीत् । बालः बुद्धिमान् न जातः एव । मित्रैः सह क्रीडन् सः अध्ययने अनासक्तः जातः । जनाः तं 'मन्दमतिः' इत्येव निर्दिशन्ति स्म ।

पुत्रस्य एतादृशीं प्रवृत्तिं दृष्ट्वा कदाचित् वणिक् खेदेन पत्नीम् अवदत् - ''पुत्रः एषः कालान्तरे मम वाणिज्यव्यवहारं निर्वक्ष्यति इति मया यत् चिन्तितं तत् वितथं जातम् इति मन्ये'' इति ।

तदा तस्य पत्नी पृष्टवती - ''सः वाणिज्ये यथा प्रवर्तेत तथा कर्तुं भवतः कः प्रयासः अस्ति ?'' इति ।



तस्य परिणामतः धनिकः भोजनसमये पुत्रम् अवदत् - ''वत्स ! श्वः आरभ्य मया सह भवता आपणं प्रति आगन्तव्यम् । वाणिज्य-व्यवहारः भवता अवगन्तव्यः अस्ति । गच्छता कालेन भवता एव एतत्सर्वं निर्वोढव्यं खलु'' इति ।

अनन्तरदिने भाग्यनाथः पित्रा सह आपणं तु गतवान् । किन्तु तत्र सः कर्मकरैः ग्राहकैः च सह जल्पन् समग्रं दिनं यापितवान् । द्वितीये दिने आपणे क्रेतृणां बाहुल्यम् आसीत् । अतः पिता पुत्रस्य विषये अधिकम् अवधानं दातुं न शक्तवान् । अपराह्णे केनचित् मित्रेण सह गच्छन् सः तेन दृष्टः । विलम्बेन एव तेन प्रत्यागतम् । तृतीये दिने तु प्रातः एव मित्रेण सह निर्गतवान् भाग्यनाथः सायङ्कालपर्यन्तम् अपि आपणं न आगतः एव ।

केषाञ्चित् दिनानाम् अनन्तरं भाग्यनाथस्य माता पतिम् अवदत् - ''वयम् एतस्य विवाहं निर्वर्तयाम । तदा एषः आधिक्येन गृहे तिष्ठेत्, उत्तरदायित्वबोधं च प्राप्नुयात्'' इति ।

वणिक् क्षणकालं विचिन्त्य पत्न्याः एतं प्रस्तावम् अङ्गीकृतवान् । सः पत्नीम् अवदत् – "वध्वाः अन्वेषणात् पूर्वं पुनरपि एकम् अवकाशं दद्मः । श्वः तस्मै त्रीणि रूप्यकाणि ददातु । एकेन रूप्यकेण किमपि क्रीत्वा खादतु नाम सः । द्वितीयं रूप्यकं तेन नद्यां क्षेप्तव्यम् । अवशिष्टेन रूप्यकेण बुभुक्षायाः निवारणाय, पिपासायाः निवारणाय, सस्यस्य वर्धनाय, धेन्वादीनाम् आहाराय च किञ्चित् किञ्चित् आनेतव्यं तेन" इति ।



वणिजा यत् उक्तं तत् ज्ञापयित्वा माता भाग्यनाथाय त्रीणि रूप्यकाणि दत्तवती । महत् आश्चर्यम् अनुभवन् भाग्यनाथः विपणिं गत्वा एकेन रूप्यकेण स्वादूनि खाद्यानि क्रीत्वा आनन्देन खादितवान् । ततः सः नदीतीरं प्रति गतवान् । कोषतः एकं नाणकं स्वीकृत्य सः तत् नद्यां क्षेप्तुम् उद्युक्तः । तावता तस्य मनसि विचारः आगतः – 'नद्यां नाणकस्य पातनं मूर्खतायै खलु ?' इति । 'मातुः निर्देशस्य अपालनम् अपि अनुचितम्' इति विचारः अपि मनसि आगतः । अतः किं करणीयम् इति निर्णेतुम् अशक्नुवन् सः तीरस्थायाः कस्याश्चित् शिलायाः उपरि उपविष्टवान् । ततः नद्याः सौन्दर्यं सम्यक् दृश्यते स्म ।

अल्पे एव काले पार्श्वे एव कस्यचित् पादध्वनिः श्रुतः । तस्य पार्श्वे स्थितवती आसीत् अर्चकस्य पुत्री भागीरथी । सा भाग्यनाथस्य मुखे चिन्तारेखां परिलक्ष्य अपृच्छत् – "भवान् नद्यां पतनं चिन्तयन् न स्यात् खलु ?" इति ।

भाग्यनाथः तां भागीरथीम् अभिजानाति स्म । मित्रस्य हरेः भगिनी सा । सः ताम् अवदत् – "नद्यां पतनस्य विचारः तु कोऽपि नास्ति । नद्यां नाणकं पातनीयम् उत न इति चिन्तयन् अस्मि" इति ।

"नद्यां नाणकं किमर्थं पातनीयम् ?" इति कुतूहलेन पृष्टवती भागीरथी ।

तदा सः प्रवृत्तं सर्वं सङ्क्षेपेण ताम् अवदत् । सर्वं श्रुत्वा भागीरथी हसन्ती अवदत् – "अलम् अविवेकेन । नद्यां धनस्य पातनेन न किमपि प्रयोजनम् । स्वनिमित्तं तस्य उपयोगः न करणीयः इति एतावत् एव भवतः मातुः वचनस्य तात्पर्यम् । अतः एतत् मात्रे एव प्रत्यर्पयतु" इति ।

"एकेन एव रूप्यकेण पञ्चप्रयोजनकानि वस्तूनि कथं क्रेतव्यानि मया ?" इति चिन्तामिश्रितेन स्वरेण अपृच्छत् भाग्यनाथः ।

"भाग्यनाथ ! सर्वथा मूर्खः भवान् ।

पञ्चविधानि वस्तूनि क्रेतव्यानि न सन्ति । एकं कलिङ्गफलं क्रीत्वा गच्छतु । तत् बुभुक्षा-पिपासयोः निवारणाय, सस्यवर्धनाय, पश्वाहार-रूपेण च भवति'' इति ।

''एवं कर्तुं शक्यते इत्यंशः मम मनसि न आगतः एव'' इति अवदत् भाग्यनाथः ।

''आगच्छतु मया सह । भवते उत्तमं फलं चित्वा दास्यामि'' इति अवदत् भागीरथी ।

गृहं गतः भाग्यनाथः कलिङ्गफलं मात्रे दत्तवान् । एतत् दृष्ट्वा माता सन्तोषेण पतिम् अवदत् - ''आवयोः पुत्रः न मन्दमतिः । सः बुद्धिमत्तां दर्शितवान् अस्ति'' इति ।

''तम् अत्र आह्वयतु'' इति पत्नीम् अवदत् वणिक् ।

''कलिङ्गफलं क्रेतव्यम् इति चिन्तनं भवतः मनसि स्वयम् आगतं न स्यात् । कोऽपि एवं करोतु इति भवन्तं सूचितवान् स्यात् । सः कः ?'' इति अपृच्छत् वणिक् ।

''हरेः भगिनी भागीरथी मम साहाय्यं कृतवती'' इति अवदत् भाग्यनाथः ।

''सा तु अर्चकस्य पुत्री खलु । सा बुद्धिमती तरुणी । सा अन्यत् किम् उपदिष्टवती ?'' इति पृष्टवान् वणिक् ।

''नाणकं नद्यां न क्षेप्तव्यम् इत्यपि अवदत् सा'' इति वदन् कोषस्थं नाणकं पित्रे दत्तवान् भाग्यनाथः ।

प्रकोष्ठात् भाग्यनाथस्य निर्गमनस्य अनन्तरं वणिक् पत्नीम् अवदत् - ''भाग्यनाथाय अनुरूपा वधूः प्राप्ता अस्ति अस्माभिः'' इति ।

''तन्नाम भागीरथी अस्माकं स्नुषा स्यात् इति खलु भवतः आशयः ?'' इति अपृच्छत् पत्नी ।

''आम् ! सा सुन्दरी बुद्धिमती च । भाग्यनाथस्य योगक्षेमादिकम् अवश्यं निर्वहेत् सा'' इति अवदत् वणिक् ।

ततः तौ दम्पती अर्चकस्य गृहं गत्वा विवाहप्रस्तावम् उपस्थापितवन्तौ । अर्चकः तत्पत्नी च सहर्षम् एतं प्रस्तावम् अङ्गीकृतवन्तौ ।

विवाहानन्तरं भाग्यनाथः आपणं प्रति गमने अनिच्छां दर्शितवान् । आपणः गन्तव्यः एव इति पतिं सानुरोधम् उक्तवती भागीरथी । अतः भाग्यनाथः आपणं तु गतवान् । किन्तु आपणे स्थितौ तस्य मनः न आसीत् । अतः पिता तम् अवदत् - ''यदि अत्र स्थितौ अनिच्छा तर्हि गृहं गम्यताम्'' इति ।





वसतिगृहान्वेषणम् आरब्धवन्तौ । कयाचित् तरुण्या चाल्यमानं वसतिगृहं ताभ्यां प्राप्तम् ।

वसतिगृहस्वामिनी तयोः कृते भोजनं परिवेषितवती । अनन्तरं सा अवदत् - ''मनोविनोदाय द्यूतक्रीडाव्यवस्था अपि अत्र अस्ति'' इति । द्यूते भाग्यनाथस्य आसक्तिः उत्पन्ना । धनं तु कोषे

ततः सप्ताहानन्तरं भागीरथी मातृगृहं गतवती । तदनन्तरदिने भाग्यनाथः आदिनम् आपणे एव उपविष्टवान् । तस्मात् पिता सन्तुष्टः । सः अचिन्तयत् यत् स्वस्य सामर्थ्यस्य प्रकाशनार्थं भाग्यनाथाय कश्चन अवकाशः दातव्यः इति । अतः सः अनन्तरदिने पुत्रम् अवदत् - ''वत्स ! श्वः भवान् नगरं गत्वा कानिचन वस्तूनि क्रीत्वा समीपस्थेषु ग्रामेषु तेषां वस्तूनां विक्रयणं करोतु । तदर्थं भवते किञ्चित् धनं दास्यामि । कश्चित् सेवकम् अपि प्रेषयिष्यामि भवता सह । रात्रौ नगरे एव वासः भवतु । परश्वः कार्यं समाप्य एव आगच्छतु भवान्'' इति ।

अनन्तरदिने भाग्यनाथः सेवकेन सह अश्वशकटम् आरुह्य नगरं गतवान् । नगरं प्राप्य अश्वशकटः तेन प्रतिप्रेषितः । ततः विपणिं गत्वा क्रेतव्यानां वस्तूनां परिशीलनं कृत्वा मूल्यादिकं निश्चित्य - ''श्वः आगत्य धनं दत्त्वा वस्तूनि नेष्यन्ते'' इति उक्त्वा तौ

आसीत् एव । ततः मन्दप्रकाशे द्यूतम् आरब्धम् । प्रथमपर्यायद्वये भाग्यनाथस्य एव जयः । अतः भाग्यनाथस्य आत्मविश्वासः प्रवृद्धः । तृतीये पर्यायेे सा महिला जयं प्राप्तवती । 'चतुर्थे पर्याये ममैव जयः' इति अचिन्तयत् भाग्यनाथः । चतुर्थपर्यायावसरे कश्चन मार्जारः आगत्य दीपम् अपातयत् । दीपस्य प्रज्वलनाय कश्चन समयः गतः । तदनन्तरं क्रीडायाः गतिः एव परिवृत्ता । सा महिला एव जयं प्राप्नोत् । एवं यदा क्रीडायां स्पर्धा तीव्रा भवति तदा मार्जारः आगत्य दीपं पातयति स्म । तया महिलया यदा सङ्केत्यते तदा मार्जारः आगत्य दीपं पातयति स्म । एतत् रहस्यं न ज्ञातं भाग्यनाथेन । अतः तस्य सर्वम् अपि धनं विनष्टम् ।

अनन्तरदिने सा महिला भाग्यनाथम् अवदत् - ''मह्यं यावत् दातव्यं तावत् धनं सेवकः आनयतु ग्रामं गत्वा । तस्य प्रत्यागमनपर्यन्तं भवान् मम उद्याने कार्यं करोतु'' इति ।

दिनद्वयम् अतीतं चेदपि पुत्रः न प्रत्यागतः इत्यतः भाग्यनाथस्य मातापितरौ चिन्ताकुलौ जातौ । तृतीये दिने सेवकः आगत्य सर्वं निवेदितवान् ।

पतिः आगच्छेत् इति द्वित्रानि दिनानि निरीक्षितवती आसीत् भागीरथी । किन्तु सः न आगतः एव इत्यतः सा एकाकिनी पतिगृहम् आगतवती । सेवकेन उक्तं तया अपि श्रुतम् । सा श्वशुरौ उक्तवती – ''अहं नगरं गत्वा पतिं प्रत्यानेष्यामि'' इति । ततः पुरुषवेषं धृत्वा सेवकेन सह नगरं प्रति प्रस्थितवती सा ।

नगरप्राप्त्यनन्तरं सेवकः तां महिलायाः वसतिगृहं प्रति नीतवान् । 'भवान् शकटे एव तिष्ठतु' इति सेवकम् उक्त्वा वसतिगृहं प्रविष्टवती सा । वसतिगृहस्वामिनी मार्जार-साहाय्येन कथं वञ्चितवती इति सा जानाति स्म । अतः सा आत्मना सह एकं मूषकम् अपि नीतवती आसीत् । वासाय एकं प्रकोष्ठं प्राप्य सा तां महिलाम् अवदत् – ''द्यूते मम विशेषासक्तिः'' इति ।

एतत् श्रुत्वा वसतिगृहस्वामिनी नितरां सन्तुष्टा । 'मया प्रभूतं धनं सम्पादयितुं शक्यते' इति अचिन्तयत् सा ।

द्यूतक्रीडा आरब्धा । स्पर्धा यदा पराकाष्ठां गता तदा वसतिगृहस्वामिनी सङ्केतेन मार्जारम् आहूतवती । तदवसरे एव भागीरथी वस्त्रान्तस्थं मूषकं दर्शितवती । मार्जारः मूषकस्य दिशि अधावत् । वसतिगृह-स्वामिन्याः उपायः विफलः जातः । अतः भागीरथ्याः एव जयः जातः । एवमेव पौनःपुन्येन प्रवृत्तम् । भाग्यनाथस्य यावती सम्पत्तिः विनष्टा आसीत् ततोऽपि अधिकां सम्पत्तिं भागीरथी प्रति-प्राप्तवती ।

अनन्तरदिने सा शकटसमीपं गत्वा सेवकाय धनं दत्त्वा अवदत् – ''एतत् धनं तस्यै महिलायै दत्त्वा आर्यं मोचयतु'' इति । सेवकः तथैव अकरोत् । भाग्यनाथः शकटसमीपम् आगतः । तत्र पत्नीं दृष्ट्वा सः नितराम् आश्चर्य-चकितः । सेवकः तं प्रवृत्तं सर्वं विस्तरेण अवदत् । ततः ते ग्रामं प्रत्यागताः ।

सकुशलं प्रत्यागतवन्तं पुत्रं स्नुषां च दृष्ट्वा वणिक् तस्य पत्नी च सन्तुष्टौ । प्रवृत्तं सर्वं श्रुत्वा वणिक् पत्नीम् अवदत् – ''भाग्य-नाथः तु परिवृत्तः न भवेत्, तथापि अस्मदीया सम्पत्तिः तु निश्चयेन रक्षिता भविष्यति । यतः तत् कार्यम् अस्माकं स्नुषा करिष्यति'' इति ।



# दृढीकरणपत्रम्

भूस्वामी हनुमद्दासः जनान् स्वयं परीक्ष्य तत्तस्य योग्यतायाः अनुगुणम् उद्योगे नियोजयति स्म । यः शुद्धहस्तः भवति तमेव ग्रामाधिकारिणं करोति स्म । एवं परीक्ष्य नियुक्तः अपि नवीनचन्द्रः नाम ग्रामाधिकारी उत्कोचग्राही जातः अस्ति इति वार्ता तेन प्राप्ता । अतः सः गुप्तचरान् प्रेषयित्वा अवगतवान् यत् नवीनचन्द्रविषये यत् श्रुतं तत् सत्यम् एव इति । ततः सः आप्तसचिवम् आज्ञापितवान् यत् नवीनचन्द्रस्य व्यवहाराणां विस्तृतं विवरणं सङ्ग्रहणीयम् इति । तस्य विवरणस्य परिशीलनात् अपि स्पष्टं जातं यत् नवीनचन्द्रः उत्कोचग्राही एव इति ।

अतः भूस्वामी नवीनचन्द्रं समस्तपुरस्य ग्रामाधिकारित्वेन नियुक्तवान् । समस्तपुरे न चौर्यं भवति स्म, न वा विवादः । जनाः शान्त्या सौहार्देन च वसन्ति स्म । भूस्वामिनः चिन्तनम् आसीत् यत् एतादृशे प्रशान्ते ग्रामे उत्कोचस्वीकाराय नवीनचन्द्रेण अवकाशः एव न प्राप्यते इति ।

मासः अतीतः । कोऽपि विवादः दोषारोपः वा नवीनचन्द्रेण न श्रुतः । अतः उत्कोचस्वीकारस्य अवसरः एव न प्राप्तः तेन । तस्मात् सः नितरां खिन्नः ।

कदाचित् सः वातायनपार्श्वे स्थित्वा मार्गे गमनागमनं कुर्वतः जनान् पश्यन् आसीत् । तावता उच्चस्वरेण वार्तालापं कुर्वन्तौ गच्छन्तौ उभौ दृष्टौ तेन । नवीनचन्द्रः तौ आहूय अपृच्छत् - ''कं विषयम् अधिकृत्य विवदमानौ स्तः भवन्तौ ?'' इति ।

तदा तयोः अन्यतरः अवदत् - ''महोदय ! आवां न विवादं कुर्वः । वस्तुतः तु आवां सुहृदौ । एतस्मिन् वर्षे माषस्य मूल्यम् अधिकं भवेत् उत कलायस्य इति विषये चर्चां कुर्वन्तौ आस्व आवाम्'' इति ।

''भवद्भ्याम् उभाभ्याम् अपि प्रतिजनं दश रूप्यकाणि दातव्यानि । भवतोः सुहृत्त्वं प्रमाणीकुर्वन् पत्रं दास्यामि अहम्'' इति अवदत् नवीनचन्द्रः ।



# वाचकानां कृते कथास्पर्धा

## चिता कथापूर्तिः अर्हति रू. २५०/- पारितोषिकत्वेन



**अधस्तनकथा पठ्यताम् -**

जयपुरस्य भूस्वामी कदाचित् कोषागारस्य रक्षणाय कञ्चित् भटं स्वीकर्तुम् इष्टवान् । वीरः वसन्तश्चेति तरुणौ एतत् कार्यम् अपेक्षमाणौ आगतौ । भूस्वामी तौ परीक्षितुम् इच्छन् वीरम् अवदत् - 'भवान् अद्य रात्रौ रक्षणकार्यं करोतु' इति । अनन्तरदिने प्रातः सः पुनरपि तम् अवदत् - 'अद्य दिवाकाले भवता उद्यानकार्यं करणीयम्' इति । एतदनुगुणं वीरः उद्यानकार्ये निरतः जातः । आनन्देन उत्साहेन च कार्ये प्रवृत्तः सः दृष्टः भूस्वामिना ।

तस्यां रात्रौ वसन्तः अपि रक्षणकार्ये तेन योजितः । अनन्तरदिने प्रातः सोऽपि सूचितः - 'अद्य दिवाकाले उद्यानकार्यं करणीयं भवता' इति । वसन्तः उद्यानकार्यम् अकरोत् । तदवसरे सः श्रान्तः इव दृष्टः । मध्याह्ने निद्रितः अपि दृष्टः सः ।

भूस्वामी वसन्तम् एव रक्षकभटकार्ये नियुक्तवान् । तदा भूस्वामिनः पत्नी आश्चर्यम् अनुभवन्ती पृष्टवती - ''किमर्थं भवता वसन्तः चितः ?'' इति ।

- भूस्वामी कीदृशम् उत्तरम् उक्तवान् स्यात् ?
- वसन्तस्य चयनावसरे भूस्वामी किं मानम् अनुसृतवान् ?

**स्वस्य अभिप्रायं १००-१५० शब्दैः लिखित्वा पिहितपत्रस्य उपरि 'Story contest' इति लिखित्वा अधस्तनेन प्रवेशपत्रेण सह प्रेष्यताम् -**

**अन्तिमः दिनाङ्कः - ३०, एप्रिल् - २००५**

नाम ---------------------- वयः --------- जन्मदिनाङ्कः -----------

विद्यालयः ------------------------------------ कक्ष्या -----------

गृहसङ्केतः -----------------------------------------------------

-----------------------------------------------------------------

------------------------------- Pincode ----------------------

पोषकस्य हस्ताक्षरम्      भागग्रहीतुः हस्ताक्षरम्

**CHANDAMAMA INDIA LIMITED**

82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097



# अपात्रदानम्

मगधराज्यं यदा उच्चदशापन्नम् आसीत् तदा बोधिसत्त्वः कस्यचित् राज्ञः आस्थाने कोषाध्यक्षः आसीत् । अशीतिकोटिमुद्रात्मिका सम्पत्तिः आसीत् तस्य ।

तेषु एव दिनेषु काशीराज्ये श्रीवत्सः नाम अन्यः कश्चन धनिकः अपि निवसति स्म । तस्यापि सम्पत्तिः अशीतिकोटिमुद्रात्मिका एव । तस्य बोधिसत्त्वस्य च महती मैत्री आसीत् ।

दौर्भाग्यवशात् वाणिज्ये श्रीवत्सस्य समग्रा सम्पत्तिः विनष्टा । तस्मात् सः निर्धनः जातः । तदवसरे सः मित्रं बोधिसत्त्वम् अस्मरत् ।

सः पत्न्या सह पादाभ्याम् एव चलन् मगधदेशम् आगत्य बोधिसत्त्वेन मिलितवान् ।

बोधिसत्त्वः मित्रस्य कुशलवार्तादिकं पृष्टवान् । तदा श्रीवत्सः खेदेन अवदत् – ''मित्र ! इदानीं दुर्दिनानि प्राप्तानि सन्ति मया । अहम् इदानीं सर्वथा निर्धनः जातः अस्मि । भवान् एकः एव मम साहाय्यं कर्तुम् अर्हेत् इति विचिन्त्य मया भवत्समीपम् आगतम् । मज्जन्तं माम् उद्धरतु कृपया'' इति ।

''मित्र श्रीवत्स ! अलं चिन्तया । विपत्तिसमये यत्र गन्तव्यम् आसीत् तत्रैव आगतः अस्ति भवान्'' इति उक्त्वा मित्रं सान्त्वयित्वा स्वस्य सम्पत्तेः अर्धभागं तस्मै दत्तवान् बोधिसत्त्वः । परिचारकाणाम् अर्धभागः अपि तस्मै दत्तः तेन ।

दिनानि, मासाः, वर्षाणि च गतानि । राज्ये प्रवृत्तायाः अराजकतायाः कारणतः कदाचित् बोधिसत्त्वस्यापि समग्रा सम्पत्तिः विनष्टा । सः पदात् च्युतः सन् निर्धनः जातः । तदा तस्य मनसि विचारः आगतः – 'एतादृशे प्रसङ्गे मित्रं श्रीवत्सः एकः एव मम साहाय्यं कर्तुम् अर्हति' इति ।

मित्रं साहाय्यं कुर्यात् एव इति विश्वासेन सः पत्न्या यह काशीराज्यं प्रति प्रस्थितवान् । काशीनगरसीमां प्राप्य सः पत्नीं कस्यचित् वृक्षस्य छायायाम् उपवेश्य अवदत् – ''भवती अत्रैव उपविशतु । अहं मित्रस्य श्रीवत्सस्य

गृहं गत्वा अस्माकं स्थितिम् उक्त्वा भवत्याः आनयनाय शकटं परिचारकाः च अचिरात् एव प्रेषयिष्यामि'' इति ।

बोधिसत्त्वः श्रीवत्सस्य गृहं प्राप्य द्वारपालकं स्वस्य नामादिकम् उक्त्वा - ''मम आगमनं भवान् स्वामिनं सूचयतु'' इति अकथयत् । द्वारपालकः अन्तः गतवान् । किञ्चिदनन्तरं प्रत्यागत्य सः बोधिसत्त्वम् अवदत्- ''स्वामी भवन्तम् आह्वयति'' इति ।

श्रीवत्सः बोधिसत्त्वं सकृत् नखशिखान्तं दृष्ट्वा अपृच्छत् - ''केन उद्देशेन आगतं भवता ?'' इति ।

''भवद्दर्शनाय आगतोऽस्मि'' इति उक्त्वा शिरः अवनमय्य अतिष्ठत् बोधिसत्त्वः ।

''कुत्र भवता वासः कृतः अस्ति ?'' इति अपृच्छत् श्रीवत्सः ।

''वासः न निश्चितः इतोऽपि । पत्नी नगरसीमायां वृक्षस्य अधः तिष्ठति'' इति अवदत् बोधिसत्त्वः ।

''मुष्टिमितं धान्यं दीयते मया । तेन यवागूं कारयित्वा खादतु'' इति उक्तवान् श्रीवत्सः ।

अनन्तरं कश्चन सेवकः मुष्टिमितं धान्यं बोधिसत्त्वाय दत्त्वा गतवान् । बोधिसत्त्वः मौनेन तत् स्वीकृत्य ततः निर्गतवान् ।

बोधिसत्त्वस्य पत्नी प्रत्यागतं पतिं पृष्टवती - ''आत्मीयेन सुहृदा तेन भवते किं किं दत्तम् ?'' इति ।

''मुष्टिमितं धान्यं दत्त्वा मां प्रेषितवान् अस्ति सः'' इति शान्ततया अवदत् बोधिसत्त्वः ।

''तत् किमर्थं स्वीकृतम् ? चत्वारिंशत्कोटिमुद्राः दत्ताः आसन् यत् तस्य प्रतिफलं किम् एतदेव ?'' इति क्रोधेन अपृच्छत् पत्नी ।

अश्रूणि स्रावयन्तीं पत्नीं सान्त्वयन् बोधिसत्त्वः शान्तस्वरेण अवदत् - ''मित्रयोः मध्ये



वैरभावः न उत्पद्येत इत्यतः मया विना प्रतिवचनं धान्यं स्वीकृतम्'' इति ।

पतिः पत्नी च एवं यदा वार्तालापं कुर्वन्तौ आस्तां तदा कश्चन सेवकः तेन मार्गेण आगतः । बोधिसत्त्वः पूर्वं यान् परिचारकान् श्रीवत्साय दत्तवान् आसीत् तेषु अन्यतमः आसीत् सः । सः बोधिसत्त्वं झटिति अभिज्ञाय पादौ स्पृष्ट्वा नमस्कृत्य अपृच्छत् - ''श्रीमन् ! कथमत्र आगतं भवता ?'' इति ।

बोधिसत्त्वः तं समग्रं वृत्तान्तं श्रावितवान् । एतत् श्रुत्वा सः परिचारकः नितरां खिन्नः । सः बोधिसत्त्वं तत्पत्नीं च स्वगृहं नीतवान् । तयोः कृते भोजनादिकं व्यवस्थाप्य वासाय प्रकोष्ठम् अपि कल्पितवान् । ततः सः एतां वार्ताम् अन्यान् सेवकान् अपि श्रावितवान् ।

अल्पे एव काले श्रीवत्सेन कृतः अनुचितः व्यवहारः सर्वैः, राज्ञा चापि ज्ञातः । राजा बोधिसत्त्वम् आनाय्य अपृच्छत् - ''भवान् श्रीवत्साय चत्वारिंशत्कोटिमुद्राः दत्तवान् आसीत् इत्येतत् किं सत्यम् ? '' इति ।

बोधिसत्त्वः राजानं प्रवृत्तं समग्रं निवेदितवान् । राजा श्रीवत्सम् आनाय्य बोधिसत्त्वं दर्शयन् अपृच्छत् - ''एतस्मात् सज्जनतः भवता चत्वारिंशत्कोटिः मुद्राः स्वीकृताः इति श्रूयते । किम् एतत् सत्यम् ?'' इति ।

तदा भीत्या कम्पमानः श्रीवत्सः अवदत् - ''सत्यं महाराज ! मया एतस्मात् तावत् धनं स्वीकृतम् आसीत् पूर्वम्'' इति ।

''प्रतिफलरूपेण भवता एतस्य साहाय्यं करणीयम् आसीत् खलु ? किमर्थं कृतघ्नता आचरिता ?'' इति अपृच्छत् राजा ।

श्रीवत्सः लज्जया शिरः अवनमय्य स्थितवान् । ततः राजा मन्त्रिप्रभृतिभिः सह समालोच्य निर्णयं श्रावितवान् यत् श्रीवत्सेन स्वस्य समग्रा सम्पत्तिः बोधिसत्त्वाय दातव्या इति ।

तदा बोधिसत्त्वः अवदत् - ''अन्यस्य सम्पत्तिः मह्यं न आवश्यकी । मम सम्पत्तिः यावती तावत् एव प्रतिदाप्यताम्'' इति ।

एतदनन्तरं राजा श्रीवत्सतः बोधिसत्त्वाय चत्वारिंशत्कोटिं मुद्राः दापयित्वा बोधिसत्त्वम् उक्तवान् - ''अपात्राय दानं न शोभते'' इति ।

एवं बोधिसत्त्वः पुनरपि धनवान् सन् दानादिकं कुर्वन् धर्मकार्याणि च अनुतिष्ठन् अनेकानि वर्षाणि सुखेन जीवितवान् ।





# विष्णुपुराणम्

कृतत्रेतयोः अनन्तरं द्वापरे युगे राक्षसाः आधिक्येन मानवरूपं प्राप्य भूलोके जन्म लब्ध्वा पृथिवीपीडनम् आरब्धवन्तः । तदा भूदेवी विष्णुं प्रार्थितवती – 'कृपया मम भारः न्यूनीक्रियताम्' इति ।

तदा विष्णुः अवदत् – ''भवती चिन्तां मा करोतु । कृष्णावतारं प्राप्य अहं भवत्याः सर्वाणि दुःखानि निवारयिष्यामि'' इति ।

कालनेमिः नाम राक्षसः विष्णोः प्रबलः शत्रुः । सः कंसनाम्ना मथुरायाम् उग्रसेनपुत्रत्वेन जन्म प्राप्तवान् । देवदानवयुद्धे दानवानां नायकः सन् विष्णुना सह यः युद्धं कृतवान् आसीत् सः विप्रचित्तिराजः जरासन्धनाम्ना जन्म प्राप्य प्रजापीडनम् आरब्धवान् । सः नृपान् बलिरूपेण भैरवाय अर्पयति स्म । कंसः तस्यैव जरासन्धस्य जामाता ।

उग्रसेनस्य अनुजस्य पुत्री देवकी यदुवंशीयाय राज्ञे वसुदेवाय दत्ता । कंसः तौ दम्पती रथे उपवेश्य प्रेषणाय यदा उद्युक्तः तदा अशरीरवाणी श्रुता – ''देवक्याः अष्टमम् अपत्यं भवतः संहारं करिष्यति'' इति ।

एतत् श्रुत्वा नितरां क्रुद्धः कंसः देवकीं मारयितुम् उद्युक्तः । तदा वसुदेवः तं दैन्येन प्रार्थितवान् – ''यदा देवकी अपत्यं प्रसूते तदा तत् अहं भवते अर्पयिष्यामि'' इति । तदा कंसः देवक्याः मारणविचारं परित्यक्तवान् । दत्तस्य वचनस्य अनुगुणं वसुदेवेन षट् अपत्यानि कंसाय अर्पितानि । देवक्याः सप्तमापत्यरूपेण जन्म प्राप्तुम् इच्छन् आदिशेषः यशोदायाः गर्भं प्रविष्टवान् ।

तदा विष्णुः योगमायाम् अवदत् – ''भवती आदिशेषयुक्तं गर्भं गोकुलवासिनः वसुदेवस्य द्वितीयपत्न्याः रोहिण्याः गर्भे निवेश्य नन्दस्य पत्न्याः यशोदायाः पुत्रीत्वेन जन्म प्राप्नोतु''



पार्श्वे आत्मना नीतं शिशुं मन्दं शाययित्वा अचेतनावस्थायां स्थितां बालिकाम् उन्नीय कारागारं प्रतिगतवान् ।

यदा वसुदेवः कारागारं प्रविष्टवान् तदा तेन आनीता बालिका उच्चैः रोदनं कृतवती । तस्याः रोदनं सर्वासु दिक्षु प्रतिध्वनितं जातम् ।

यदा कंसः तां बालिकां शिलया घट्टयितुम् उद्युक्तः तदा सा तस्य हस्तात् च्युता सती आकाशं प्रति गतवती । उच्चैः हसन्ती सा कंसम् अवदत् – ''अये दुष्ट, कंस ! भवतः संहर्ता शिशुः अन्यत्र जीवति'' इति । एतावत् उक्त्वा सा दुर्गादेवीरूपेण दृष्टिगोचरतां प्राप्य क्षणानन्तरम् अदृश्यतां गता ।

गोकुले कृष्णस्य जन्म निमित्तीकृत्य महान् उत्सवः आचरितः । कृष्णस्य जननात् पूर्वम् एव रोहिण्याः गर्भतः बलरामः जन्म प्राप्तवान् आसीत् ।

कदाचित् नारदः कंससमीपम् आगत्य अवदत् – ''हे कंस ! भवान् उग्रसेनस्य पुत्रमात्रं न । वस्तुतः भवान् कालनेमिः अस्ति । भवतः संहाराय विष्णुः कुत्रचित् जन्म प्राप्तवान् अस्ति इति भवता श्रुतं स्यात् । सर्वे राक्षसाः भवतः आदेशं प्रतीक्षमाणाः तिष्ठन्ति'' इति ।

कदाचित् उग्रसेनपत्नी पतिविरहदुःखिता आसीत् । तस्मिन् समये कश्चन राक्षसः उग्रसेन-रूपेण गत्वा तां वञ्चितवान् । तस्मात् कालनेमिः तस्याः गर्भं प्रविश्य कंसरूपेण जन्म प्राप्तवान् आसीत् ।

कंसः पितरम् उग्रसेनम् एव कारागारे स्थापयित्वा स्वयं सिंहासनम् आरूढवान् । सर्वान् राक्षसान् सङ्घट्य सः भूलोके स्थितानां

इति ।

देवक्याः सप्तमः गर्भः प्रसवपर्यन्तं न स्थितः एव । एतदनन्तरं देवकी अष्टमवारं गर्भं धृतवती । तदा कंसः देवकीं वसुदेवं च कारागारे अस्थापयत् ।

भाद्रपदमासस्य कृष्णपक्षः सः । अष्टम्यां तिथौ चन्द्रः रोहिणीनक्षत्रं प्राविशत् । मध्य-रात्रसमये सर्वे कारागाररक्षकाः भटाः गभीर-निद्रां प्राप्तवन्तः । तस्मिन् समये देवकी पुत्रं प्रसूतवती । विष्णुः कृष्णरूपेण अवतारं प्राप्त-वान् । तस्य जन्मनः समनन्तरमेव कारागारस्य द्वारं स्वयम् उद्घाटितं जातम् ।

विष्णोः आदेशस्य अनुगुणं वसुदेवः तं शिशुं यमनानद्याः अपरं तीरं नीतवान् । तस्मिन् समये गोकुलवासिनः सर्वे मायानिद्रावशं गताः आसन् । निद्रावस्थायां स्थिता एव यशोदा बालिकायै जन्म दत्तवती । वसुदेवः यशोदायाः

शिशूनां संहाराय पूतनानामिकां राक्षसीं प्रेषितवान् । पूतना ग्रामं ग्रामं गत्वा शिशून् संहृत्य गोकुलम् आगतवती । कृष्णं दृष्ट्वा सा तं स्तन्यं पाययितुम् उद्युक्ता । तदा कृष्णः स्तन्यं पिबन् एव तां संहृतवान् ।

झञ्झावातरूपेण आगत्य आकाशं प्रति नेतुम् उद्युक्तं तृणावर्तराक्षसं, शकटरूपेण आगत्य मारयितुम् उद्युक्तं शकटासुरं च बालकः कृष्णः लीलया मारितवान् ।

यशोदा कृष्णम् औरसपुत्ररूपेण महता वात्सल्येन पोषितवती । बालः कृष्णः गृहं गृहं प्रविश्य नवनीतं चोरयति स्म । तेन विविधाः लीलाः प्रदर्शिताः । ताः लीलाः दृष्ट्वा गोकुलवासिनः आनन्दसागरे निमग्नाः भवन्ति स्म ।

कदाचित् यशोदा कृष्णम् उलूखले बद्धवती । कृष्णः उलूखलं कर्षन् उभयोः वृक्षयोः मध्ये अगच्छत् । तस्मात् तौ वृक्षौ समूलं पतितौ । तदा वृक्षरूपेण स्थितौ गन्धर्वौ शापात् मुक्तिं प्राप्तवन्तौ ।

यशोदा श्रुतवती यत् कृष्णेन मृत्तिका भक्षिता इति । अतः सा तं भर्त्सयन्ती अवदत् यत् मुखम् उद्घाट्यताम् इति । मुखं सुविशालम् उद्घाटयता कृष्णेन मात्रे विश्वरूपं दर्शितम् ।

कालियमहासर्पस्य फणासु नृत्यं कृत्वा तस्य मर्दनमपि कृतवान् सः । गोकुलवासिनः बृन्दावनं गत्वा गोवर्धनपर्वतस्य पूजां कृतवन्तः । तस्मात् क्रुद्धः इन्द्रः मुसलधारावृष्टिं कृतवान् । तदा कृष्णः कनिष्ठिकया गोवर्धनपर्वतम् उन्नीय छत्रवत् गृहीतवान् । गोप्यः धेनवः गोपाः च तस्य अधः स्थितवन्तः । एवं कृष्णः इन्द्रस्य



गर्वस्य भङ्गं कृतवान् ।

कृष्णः वेणुगोपालः सन् गाः चारितवान् । वेणुं वादयन् गोपीः, गाः, बृन्दावनवासिनः च तन्मयान् कृतवान् । छद्मवेषेण आगतान् राक्षसान् बहून् यमसदनं प्रति प्रेषितवान् । बलरामः अपि कांश्चन राक्षसान् संहृतवान् ।

कृष्णं बलरामं च संहर्तुम् इच्छन् कंसः धनुर्यज्ञव्याजेन तौ मथुरां प्रति आनायितवान् । तयोः संहाराय तेन यत् कुतन्त्रम् आरचितं तत् विफलीकृतवन्तौ तौ यदुवंशीयौ बालकौ ।

कृष्णः सिंहासनस्थं कंसं शिखायां गृहीत्वा आकृष्य मुष्ट्या प्रहृत्य मारितवान् । ततः देवकी, वसुदेवः, उग्रसेनः च तेन कारागारात् मोचिताः । उग्रसेनश्च सिंहासने प्रतिष्ठापितः । गच्छता कालेन कृष्णः बलरामः च यदुवंशस्य नायकौ जातौ ।

पुत्र्योः अस्तिप्रास्त्योः विधवात्वं कल्पितम्

इत्यतः क्रुद्धः जरासन्धः कृष्णं संहर्तुम् ऐच्छत् । सः द्वाविंशत्या अक्षौहिण्या सहितः सन् मथुराम् आक्रान्तवान् । कृष्णः तं पराजित्य सजीवं प्रतिगमनाय तस्मै अनुमतिं दत्तवान् । कालयवनः नाम कश्चन राक्षसः कृष्णस्य विरोधाय जरासन्धेन प्रेरितः । अतः कालयवनः कृष्णम् अनुसृत्य आगतवान् । कृष्णः तस्मात् आत्मानं रक्षन् मुचुकुन्दगुहां प्रविष्टवान् ।

मुचुकुन्दः इक्ष्वाकुवंशीयः चक्रवर्ती । मान्धातुः पुत्रः सः । देवासुरसङ्ग्रामे सः देवानां साहाय्यं कृतवान् आसीत् । तेन सन्तुष्टाः देवाः अवदन् यत् वरः याच्यताम् इति । मुचुकुन्दः मोक्षम् अयाचत् । तदा देवाः उक्तवन्तः यत् द्वापरयुगे भवान् कृष्णदर्शनं प्राप्स्यति, ततः एव भवतः मोक्षः इति । तदा मुचुकुन्दः देवान् प्रार्थितवान् आसीत् यत् यः मम दीर्घनिद्रायाः भङ्गं करिष्यति सः भस्मसात् भवेत् इति ।

कालयवनः गुहां प्रविश्य मुचुकुन्दं कृष्णं भावयन् पादेन प्रहृतवान् । एतस्मात् मुचुकुन्दस्य निद्रा भग्ना । सः तीक्ष्णदृष्ट्या कालयवनम् अपश्यत् । तेन कालयवनः भस्मतां गतः । कृष्णः मुचुकुन्दाय आत्मानं दर्शयन् अवदत् - ''भवान् बदरिकाश्रमं गत्वा तपः करोतु । तत्र मोक्षः प्राप्स्यते भवता'' इति ।

जयविजयौ तृतीये जन्मनि कृष्णस्य शत्रुभूतौ सन्तौ शिशुपालदन्तवक्त्ररूपेण जन्म प्राप्तवन्तौ । चेदिराजस्य दमघोषस्य पुत्ररूपेण शिशुपालः यदा जन्म प्राप्तवान् तदा तस्य चत्वारः हस्ताः, त्रीणि नेत्राणि च आसन् । तस्य जन्मसमये अशरीरवाणी श्रुता यत् यस्य उन्नयनात् एतस्य शिशोः उभौ हस्तौ, एकं नेत्रं च अदृश्यतां गच्छन्ति, सः एव एतस्य संहारकः भविष्यति इति ।

शिशुपालस्य माता सात्वती गृहम् आगतान्



सर्वान् अपि वदति स्म यत् एषः शिशुः उन्नेतव्यः इति । सा एव कृष्णबलरामयोः मातुलानी । तयोः हस्ते अपि शिशुं स्थापितवती सा । यदा शिशुः कृष्णेन उन्नीतः तदा सः सामान्यबालकवत् जातः । तदा सात्वती कृष्णं प्रार्थितवती - 'भवता एतस्य शतम् अपराधाः मर्षणीयाः' इति । 'तथास्तु' इति उक्तवान् कृष्णः ।

शिशुपालः राजत्वं प्राप्य जरासन्धेन सह सम्भूय अनेकान् अपराधान् अत्याचारान् च कृतवान् । तदीयः अनुजः दन्तवक्त्रः एतेषु कृत्येषु अग्रजस्य साहाय्यम् आचरति स्म ।

जरासन्धः पौनःपुन्येन मथुराम् आक्रान्तुं प्रयासं कृतवान् । कृष्णः तं बहुवारं पराजितवान् । कृष्णेन बहवः अत्याचारिणः, दुष्टाः राजानः च संहृताः ।

कृष्णः समुद्रराजं सम्प्रार्थ्य समुद्रस्य मध्यभागे भूमिं प्राप्य तत्र विश्वकर्मद्वारा सुरक्षाकल्पकं नगरं निर्मापितवान् । स्ववंशीयान् सर्वान् सः तत्र प्रेषितवान् ।

कदाचित् शिशुपालः दन्तवक्त्र-पौण्ड्रक-शाल्वप्रभृतिभिः अनुयायिभिः सह आगत्य मथुराम् आक्रान्तवान् । ततः पूर्वम् एव कृष्णः बलरामः च यादवान् मथुरावासिनः अन्यान् च द्वारकां प्रापितवन्तौ आस्ताम् । शिशुपालादीनाम् आगमनं ज्ञात्वा तौ प्रहर्षणगिरेः शिखरं प्राप्तवन्तौ ।

जरासन्धादयः प्रहर्षणगिरेः चतसृषु अपि दिक्षु अग्निं प्रवर्तितवन्तः । किन्तु तावता कृष्णबलरामौ आकाशमार्गेण द्वारकां प्राप्तवन्तौ आस्ताम् । कृष्णबलरामौ अग्निना दग्धौ



इति चिन्तयन्तः जरासन्धशिशुपालादयः वाद्यं वादयन्तः प्रत्यागच्छन्तः आसन् । तावता द्वारकां प्राप्तवान् कृष्णः शङ्खोद्घोषं कृतवान् ।

शङ्खध्वनिं श्रुतवतां सर्वेषां मुखं विच्छायं जातम् । सर्वे प्रश्नार्थकदृष्ट्या परस्परं मुखं दृष्टवन्तः । एतस्मात् नितरां क्रुद्धः शिशुपालः मथुरानगरीं दग्धवान् ।

द्वारकायाः वशीकरणाय जरासन्धः नौकया महतीं सेनां प्रेषितवान् । किन्तु समुद्रे उत्पन्नस्य झञ्झावातस्य कारणतः सर्वाः नौकाः जले निमग्नाः जाताः । जरासन्धः समुद्रतीरे स्थित्वा समुद्रतरङ्गाणां नृत्यं पश्यन् आसीत् । तावता कृष्णेन कृतं सम्बोधनं, हासध्वनिः च तेन श्रुतः । कृष्णः समद्रे लघुपर्वतस्य उपरि हसन्मुखतया स्थितः आसीत् ।

''जरासन्ध ! भवान् अस्मान् पीडयितुं न अर्हति । समुद्रः अस्मान् रक्षति । मद्द्वारा

मरणप्राप्तिः भवतः ललाटे लिखिता नास्ति । भवत्सदृशः बलशाली एव कश्चित् भवन्तं मारयिष्यति । अचिरात् एव आवयोः पुनर्मेलनं भविष्यति'' इति अवदत् कृष्णः ।

लक्ष्मीः विदर्भराजस्य भीष्मकस्य पुत्री-रूपेण रुक्मिणीनाम्ना जन्म प्राप्तवती । सा आ बाल्यात् कृष्णम् एव पतिं भावयति स्म । रुक्मिण्याः अग्रजः रुक्मिः कृष्णस्य शत्रूणां पक्षम् आश्रितवान् । सः शिशुपालाय भगिनीं दातुम् इच्छति स्म । तदा रुक्मिणी कृष्णाय सन्देशं प्रेषितवती यत् अग्रजस्य प्रयासस्य भङ्गं कृत्वा भवता अहं परिणेतव्या इति ।

विवाहात् पूर्वस्मिन् दिने रुक्मिणी दुर्गापूजां समाप्य मन्दिरतः प्रत्यागच्छन्ती आसीत् । तदा तत्र उपस्थितः कृष्णः ताम् अश्वस्य उपरि आरोप्य ततः प्रस्थितवान् । रुक्मि-शिशुपाल-जरासन्धादयः तेन सम्मुखीकृताः ।

अत्रान्तरे बलरामः यादववीरैः सह आगत्य कृष्णस्य साहाय्यम् आरब्धवान् । कृष्णः शिशुपालं, बलरामः जरासन्धं च पराजित-वन्तौ । अन्ये अपि राजानः पराजयं प्राप्य ततः प्रतिगताः । कृष्णः विजयशङ्खं वादयित्वा रुक्मिणीं रथे उपवेश्य यदा गच्छन् आसीत् तदा रुक्मिः कृष्णस्य गमनम् अवरुद्धवान् । कृष्णः तं बन्धिनं कृत्वा तदीयं शिरः मुण्डयित्वा श्मश्रु अपनीय सप्राणं प्रेषितवान् । एतदनन्तरं रुक्मिणा कृष्णविरोधविचारः परित्यक्तः ।

क्षत्रियोचितरीत्या एव रुक्मिणीं नीतवान् आसीत् कृष्णः । ततः कृष्णरुक्मिण्योः विवाहः सवैभवं सम्पन्नः ।

कृष्णविषये आरोपः श्रूयते स्म यत् सः सत्राजितः भ्रातरं मारयित्वा ततः स्यमन्तक-मणिम् अपहृतवान् अस्ति इति । एतम् अपवादं निवारयितुम् इच्छन् कृष्णः स्यमन्तकमणेः अन्वेषणाय उद्युक्तः जातः । ततः अरण्ये कस्याञ्चित् गुहायां तेन सः मणिः दृष्टः । कृष्णः जाम्बवता सह युद्धं कृत्वा मणिं प्राप्य जाम्बवतः पुत्रीं जाम्बवतीं परिणीतवान् । मणिं सत्राजिते समर्प्य भूदेव्यंशभूतां तदीयां पुत्रीं सत्यभामाम् अपि सः परिणीतवान् । मित्र-विन्दा, कालिन्दी, लक्षणा, भद्रा, नाग्नजितिः इत्येताः अपि परिणीय अष्टमहिषीसमेतः सन् अष्टसिद्धिभिः पूर्णः इव सः द्वारकां राजधानीं परिकल्प्य राज्यशासनम् आरब्धवान् ।



# विचित्रं छत्रम्

हेलापुरग्रामीणः कमलनामकः कदाचित् मुख्यकार्यार्थं सुगन्धिपुरं गन्तुं सिद्धः सन् आतपकारणात् छत्रं गृहीत्वा प्रस्थितः । पार्श्ववीथ्यां स्थितः शीतलनामकोऽपि छत्रं गृहीत्वा सुगन्धिपुरमेव प्रस्थितः आसीत् । उभौ अपि सम्भाषणं कुर्वन्तौ प्रस्थितौ । शीतलः कमलस्य छत्रं पश्यन् - ''कमल ! वर्षद्वयात् पूर्वम् आवाम् उभौ अपि एकस्मिन्नेव दिने रणवीरस्य आपणतः एते छत्रे क्रीतवन्तौ ननु । मम छत्रम् इदानीम् एव बहुपुरातनमिव दृश्यते । तत्र तत्र तत् छिन्नमपि । किन्तु भवतः छत्रम् इतोऽपि नूतनमिव भासते । अत्र किं कारणं स्यात् ?'' इति पृच्छन् आश्चर्यमपि प्रदर्शितवान् ।

''अत्र आश्चर्यकरं किमपि नास्ति । मया अस्य छत्रस्य समीकरणं पञ्चषवारं कारितम् । अतः एव एतत् नूतनमिव दृश्यते'' इति उक्तवान् कमलः ।

''किमेवं वदति भवान् ? बहुवारं समीकरणं कारितं चेदपि छत्रं नूतनमिव भवितुं न अर्हति । मया अपि मम छत्रस्य समीकरणं बहुवारं कारितम् । तथापि तत् तु पुरातनमिव एव दृश्यते'' इति शीतलः उक्तवान् ।

''एतत् मयि अपि आश्चर्यं जनयति । शीतल ! सप्ताहद्वयात् पूर्वं वस्तूनि आनेतुं विपणिं गतवान् आसम् । तत्र अहं लक्ष्मणं दृष्टवान् । आवाम् उभौ अपि काष्ठापणं गतवन्तौ । तत्र काष्ठपरीक्षणे निरतौ । तस्मिन् समये आवाभ्याम् आवयोः छत्रे उत्पीठिकायां स्थापिते ! काष्ठक्रयणानन्तरम् आवाभ्यां छत्रे स्वीकृत्य प्रस्थितम् । आवयोः मार्गः भिन्नः आसीत् । गृहमागत्य पश्यामि - मम हस्ते स्थितं छत्रं नूतनमिव शोभते स्म । तत् दृष्ट्वा मम आश्चर्यम् अभवत्'' इति कमलेन उक्तम् ।

कमलस्य लक्ष्मणस्य च विस्मरणशीलता कस्य लाभाय अभवत् इति ज्ञातवतः शीलतस्य मुखं हासेन पूर्णं जातम् ।





# बुभुक्षानिवारकम् औषधम्

कदाचित् देशे महाक्षामः आगतः । राजा मन्त्रिणः अधिकारिणः च मेलयित्वा अवदत् – ''अस्माकं देशे क्षामः विजृम्भते । जनाः बुभुक्षया मरणं प्राप्नुवन्तः सन्ति । बुभुक्षानिवारणाय अहं वैद्यानां द्वारा तादृशम् औषधं कारयिष्यामि, येन भाविनि काले जनानां बुभुक्षापीडा एव न भवेत्'' इति ।

अधिकारिणः मन्त्रिणः च एतत् श्रुत्वा मौनेन स्थितवन्तः । किम् उक्तं चेत् राजा किं चिन्तयेत् इति ज्ञायते इति ते अचिन्तयन् ।

तावता वृद्धः मन्त्री सुबुद्धिः उत्थाय अवदत् – ''महाराज ! देशे प्रतिवर्षम् अपि कुत्रचित् वा क्षामः भवति एव । जलव्यवस्था योग्या कृता चेदेव प्रायः क्षामः निवारयितुं शक्यः । औषधदानेन बुभुक्षां निवारयितुं, तद्द्वारा क्षामं स्थगयितुं च यत्नः व्यर्थः एव'' इति ।

''औषधदानेन एव क्षामनिवारणं शक्यम् इति मम दृढः विश्वासः'' इति अवदत् राजा ।

''भवान् सर्वदा मम मतं खण्डयति एव'' इति सुबुद्धिं निन्दितवान् सः । राज्ञः असन्तोषं प्राप्तुम् अनिच्छन्तः अन्ये मन्त्रिणः एतत् दृष्ट्वा राज्ञः निर्णयस्य समर्थनं कृतवन्तः ।

ततः राजा देशस्य सर्वान् वैद्यान् समावेश्य आदिष्टवान् – ''मासाभ्यन्तरे भवद्भिः बुभुक्षानिवारकम् औषधं निर्मातव्यम्'' इति ।

सर्वे वैद्याः राज्ञः आदेशं श्रुत्वा आश्चर्यचकिताः सञ्जाताः । तेषु कश्चित् अवदत् – ''महाराज ! क्षन्तव्याः वयम् । बुभुक्षानिवारकम् औषधं कस्मिंश्चित् अपि ग्रन्थे उपवर्णितं नास्ति'' इति ।

''वराकान् एतान् सर्वान् वैद्यान् कारागारे स्थापयन्तु'' इति आदिष्टवान् राजा ।

तावता कश्चन वृद्धः वैद्यः उत्थाय अवदत् – ''महाराज ! एते कारागारे न स्थापनीयाः । सप्ताहाभ्यन्तरे अहं तस्य बुभुक्षानिवारकस्य औषधस्य निर्माणं करिष्यामि'' इति ।

'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'

''वैद्यः नाम एवं भवेत्'' इति वदन् राजा तं प्रंशसितवान्, अन्येषां वैद्यानां कारागार-मुक्तिम् आदिष्टवान् च ।

ततः पञ्चषाणां दिनानाम् अनन्तरं सः वृद्धः ताडफलसदृशं औषधम् आनीय राज्ञे दत्त्वा - ''गुञ्जाप्रमाणेन यदि जनाः एतस्य सेवनं करिष्यन्ति तर्हि ते जीवने पुनः कदापि बुभुक्षां न प्राप्स्यन्ति'' इति ।

राजा तस्य वृद्धस्य सम्माननं कृत्वा नगरस्थेभ्यः सर्वेभ्यः तस्य औषधस्य वितरणं कारितवान् । राजभवनवासिनः तत् औषधं न सेवितवन्तः । अतः ते तु यथापूर्वं बुभुक्षां प्राप्नुवन्ति स्म । नगरवासिनः बुभुक्षापीडां अनुभवन्तः न सन्ति इति वार्तां राजानं निवेद्य मन्त्री अवदत् - ''महाराज ! जनाः कार्यं सर्वथा परित्यक्तवन्तः सन्ति । बुभुक्षाबाधा नास्ति इत्यतः ते सदा निद्रायां मनोरञ्जने च प्रवृत्ताः दृश्यन्ते'' इति ।

''तथापि बुभुक्षासमस्या तु सर्वथा निवृत्ता एव खलु'' इति अवदत् राजा ।

दिनद्वयस्य अनन्तरं मन्त्री राजानं पुनः अवदत् - ''जनाः स्ववृत्तिं सर्वथा परि-त्यक्तवन्तः सन्ति । तन्तुवायः न वस्त्रं वयति, क्षौरिकः न क्षौरं करोति, तक्षकः न काष्ठकर्म करोति, वणिक् न वाणिज्यं करोति । अतः नगरे वस्तूनां सर्वथा अभावः । पूर्वम् आपणेषु धान्यमात्रं न प्राप्यते स्म, इदानीं तु किमपि वस्तु न लभ्यते । अधिकं सुवर्णं दत्त्वा अपि कष्टेन एव कानिचन वस्तूनि प्राप्तव्यानि भवन्ति'' इति ।

राजा एतत् श्रुत्वा अपि मौनेन एव स्थितवान् ।

''महाराज ! जनाः नियमभङ्गं कुर्वन्तः सन्ति । समग्रे देशे अराजकता दृश्यते'' इति



अवदत् मन्त्री ।

"मया येषां महत् साहाय्यं कृतं ते एव किम् एवम् आचरन्ति ? तेषां निग्रहाय सेना सिद्धा भवतु" इति क्रोधेन अवदत् राजा ।

"इदानीं सेना अपि कुत्र अस्ति ? बहवः सैन्यं परित्यज्य गताः सन्ति" इति अवदत् मन्त्री ।

तावता सेनापतिः वेगेन आगत्य भीतिमिश्रितेन स्वरेण अवदत् - "महाराज ! शत्रुः चण्डप्रचण्डः अस्माकं राजधानीम् आक्रान्तवान् अस्ति" इति ।

"किम् एतत् ? कथम् एवं प्रवृत्तम् ? इदानीं किं करणीयम् अस्माभिः ?" इति आतङ्केन अपृच्छत् राजा ।

"शरणागतिप्रार्थना एव इदानीं परिहारः" इति शान्ततया एव अवदत् मन्त्री ।

तावता शत्रुसैनिकाः केचन तत्र उपस्थिताः । तेषां नायकः राजानम् अवदत् - "महाराज ! भवतः राज्यम् अस्मदधीनं जातम् अस्ति । अस्माकं विरोधः वृथा । यदि विरोधः क्रियेत तर्हि प्राणवियोगः भवेत्" इति ।

"विरोधस्य सामर्थ्यं वा मम कुत्र अस्ति ? बुभुक्षानिवारकस्य औषधस्य कारणतः मम सैन्यम् अपि विनष्टम् अस्ति । इदानीं बन्धनम् एव शरणम्" इति विषादेन उक्तवान् राजा ।

तावता वृद्धः वैद्यः अग्रे आगत्य अवदत् - "महाराज ! मया पूर्वम् एव उक्तम् आसीत् यत् बुभुक्षानिवारकम् औषधम् अनर्थकारकम् इति । किन्तु भवता तत् न श्रुतम्" इति ।

"तस्य फलम् इदानीम् अनुभवन् अस्मि खलु ?" इति विषादपुरस्सरम् अवदत् राजा ।

"इदानीं भवता वस्तुस्थितिः अवगता इत्यतः मम मनः नितरां सन्तुष्टम् अस्ति" इति वदन् स्वस्य श्मश्रुप्रभृतिकम् अपनीतवान् वृद्धः । वस्तुतः सः आसीत् मन्त्री सुबुद्धिः ।

"महाराज ! कृपया भवता क्षन्तव्यः अहम् । भवद्द्वारा प्रजाहितकराणि कार्याणि कारणीयानि इति उद्देशेन मया एतत्सर्वं कृतम् । शत्रुसैनिकरूपेण स्थिताः तु अस्मदीयाः एव सैनिकाः, न तु शत्रवः । भवान् कस्यापि बन्दी न । देशस्य सम्पत्तेः समुचितोपयोगं कर्तुं योजना रच्यताम् । भूमिः सस्यश्यामला क्रियताम् । तेन क्षामः स्वयं निवृत्तः भविष्यति" इति अवदत् मन्त्री सुबुद्धिः ।



२०

सिंहासनं बलात् वशीकृतवन्तः वीरसिंहस्य प्रयत्नाः विफलाः भवन्ति । जयनगरे स्वर्णप्रतिमा प्राप्ता अस्ति इति वार्ता ज्ञायते । तां विक्रीय आयुधानि क्रेतुम् इच्छन् सः तां वशीकर्तुम् इष्टवान् । प्रतिमा जयनगरीयस्य दलपतेः सुखदेवस्य प्रासादे भवति । तां दातुं न सिद्धः सुखदेवः । अतः वीरसिंहसैनिकाः आक्रमणं कुर्वन्ति ।

# आर्यः

## अज्ञातराजकुमारस्य रहस्यम्

चित्रम् - गान्धि-अय्यः

दलपतिः बहिः आगच्छति ।

महोदय ! वयं प्रतिमाम् उन्नेतुं समर्थाः न जाताः ।

किं प्रतिमायाः प्रतिष्ठापनम् एतावता एव कृतम् अस्ति ?

सुखदेवः किमपि उत्तरं न वदति ।

भूमौ खननं कृत्वा ताम् उन्नयन्तु ।

यथाज्ञा

जब्बरसिंहः शकटेन प्रतिमां नयति । शकटम् उभयतः रक्षकभटाः भवन्ति ।

भूमिखननशब्दः श्रूयते । किञ्चिदनन्तरम्.....

भगवति ! वयं भवत्याः निमित्त मन्दिरस्य निर्माणं करिष्यामः ।

प्रतिमा बहिः आनीता ।

गम्यताम्


आश्रमे जयानन्दः ध्याने निमग्नः अस्ति ।


अकस्मात् मुनिः उत्थाय तिष्ठति ।
आर्य ! गोविन्द ! मया प्रतिमा अन्तर्दृष्ट्या दृष्टा अस्ति ।


केचन नौकया तां नेतुं प्रयतन्ते । वयं नद्याः पश्चिमतीरं गच्छाम ।


नौकायां प्रतिमां स्थापयित्वा सैनिकाः प्रस्थानं कुर्वन्ति । सेनापतिः दलपतिः च नौकाम् अनुसरतः ।


पशवः आगताः । त्वर्यताम् ।
ते कुतः आगताः ?
पशवः नौकासमीपम् आगच्छन्ति ।


तान् दृष्ट्वा नाविकादयः आतङ्कग्रस्ताः भवन्ति । तावता महातरङ्गस्य कारणतः नौका डोलायमाना भवति ।
प्रतिमा दृढतया गृह्यताम् ।
सेनापतिवर्य ! किं नौकां परित्यजेम ?

वेगेन चलतः वायोः कारणतः उत्पन्नानां महातरङ्गाणाम् आघाततः नौका डोलायमाना भवति । कश्चन युवकः वटवृक्षस्य जटां गृहीत्वा आगत्य प्रतिमां स्वीकृत्य क्षणाभ्यन्तरे अदृश्यः भवति ।

नाविकाः ! कुत्र सन्ति भवन्तः ?

प्रतिमा !

प्रतिमा अदृश्यतां गता !




जब्बरसिंहः दलपतिः च भटानाम् अन्वेषणाय उद्युक्ताः भवन्ति ।








आर्यः इति नाम अश्रुतपूर्वम् ।

अपरस्य बाणस्य आगमनात् पूर्वम् अस्माभिः इतः निर्गन्तव्यम् ।

वीरसिंहः सेनापतेः कथनं श्रुत्वा नितरां क्रुद्धः भवति ।

महोदय ! प्रतिमा अकस्मात् एव अदृश्यतां गता । कापि माया प्रवृत्ता तत्र ।

अलौकिकशक्तयः अस्मद्विरुद्धं कार्यं कुर्वत्यः सन्ति इति भाति ।

व्यर्थप्रलापिन् ! भवतः वचने विश्वासः नास्ति मम । एतादृशस्य वचनस्य कथनात् किं भवान् न लज्जते ?

एषः किं वक्तुम् इच्छति ?

महोदय ! अरण्ये यत् प्रवृत्तं तत् स्मृतिपथे अस्ति खलु ?

वीरसिंहः स्वस्य क्रोधं निग्रहीतुं न शक्नोति ।

मूर्ख ! तां लज्जाकरीं घटनां पुनः मा स्मारयतु भवान् । प्रतिमायाः आनयनाय मया अन्यः एव प्रेषणीयः आसीत् ।

नाविकाः ! कुत्र सन्ति भवन्तः ?

प्रतिमा यत्रकुत्रचित् अस्ति चेदपि महता प्रयासेन वा आनेतव्या एव ।

अस्तु, श्रीमन् !

अनुवर्तते

# नलन्दाविश्वविद्यालयः

अस्माकं देशे गुप्तराजानां शासनकालः 'स्वर्णयुगम्' इति प्रसिद्धः । तस्मिन् कालखण्डे कलानां शिल्पानां च अत्युच्चं स्थानम् आसीत् । कालिदासः दण्डी इत्यादयः महाकवयः गुप्तराजानाम् आस्थाने आसन् । गुप्तराजानां शासनकाले एव अजन्तागुहाः निर्मिताः । गुप्तराजैः अनेकेषां शास्त्राणां प्रोत्साहनम् अपि कृतम् ।

४५३ तमे क्रिस्ताब्दे विक्रमादित्यस्य पुत्रः कुमारगुप्तः (प्रथमः) सम्राट् जातः । सः एव नलन्दानामकं जगत्प्रसिद्धं विश्वविद्यालयं प्रतिष्ठापितवान् ।



एतस्मिन् विश्वविद्यालये बौद्धग्रन्थानां यथा, तथैव वेदानाम् अपि पठनं प्रचलति स्म । एषः विश्वविद्यालयः सप्तशतं वर्षाणि यावत् अनुस्यूततया विद्याप्रसारम् अकरोत् । एतं विश्वविद्यालयं प्रति न केवलं देशस्य नानाकोणेभ्यः, अपि तु दक्षिणैशियातः चीनादिदेशेभ्यः च विद्यार्थिनः आगच्छन्ति स्म । चीनदेशीयः प्रसिद्धः यात्रिकः ह्युयेन्त्साङ्गः सप्तमे शतके अत्र स्थित्वा किञ्चित्कालम् अध्ययनं कृतवान्, विश्वविद्यालयम् अधिकृत्य बहून् विषयान् लिखितवान् च ।

सहस्रशः विद्यार्थिनः वासं कृत्वा यथा अध्ययनं कर्तुं शक्नुयुः तथा अत्र अनेके मण्डपाः प्रकोष्ठाः च निर्मिताः आसन् । नलन्दाविश्वविद्यालयस्य अवशेषाः पटनानगरस्य पूर्वस्यां दिशि ६० मैल्दूरे सन्ति ।

# पृच्छ्यं भवताम् पृच्छ्यं भवताम्

## भवदर्थं विज्ञानम्

### चर्मचरित्रम्

अस्माकं शरीरे स्थितं विशालतमम् इन्द्रियं किम् इति किं भवन्तः जानन्ति ? तदस्ति चर्म । अस्माकं शरीरस्य १६% भारः चर्मणः एव भवति ।

एतत् चर्म अनेकविधानि कार्याणि करोति । परिसरवैपरीत्यात् शरीरं रक्षति तत् । चर्मस्थाः ग्रन्थयः अनावश्यकं जलांशं लवणांशं च शरीरात् निष्कासयन्ति, येन शरीरतापः समस्थितौ भवति । 'मेलनिन्'नामकं वर्णद्रव्यं शरीरस्य वर्णं कल्पयति । सूर्यतः निर्गच्छताम् अतिनीलकिरणानां बाधां तत् निवारयत्यपि ।

चर्मणः अपरं वैशिष्ट्यं नाम नष्टं भागं तत् स्वयम् उत्पादयति । यदा व्रणादिकारणतः चर्म अपगच्छति तदा चर्मकोषाः वेगेन कार्यं कुर्वन्तः क्षतिपूरणं कुर्वन्ति ।



## भवतां परिसरः

### काङ्गरूमूषकः



'काङ्गरूमूषकः' इत्येतस्य शब्दस्य श्रवणात् कीदृशं चित्रं भवतां नेत्रयोः पुरतः उपस्थितं भवति ? काङ्गरूपशोः मूषकस्य वा ननु ? वस्तुतः तु: 'काङ्गरूमूषक'नामकः एषः न काङ्गरू, न वा मूषकः । मरुभूमौ निवसन् एषः काङ्गरूसादृश्यं वहति इत्यतः एतस्य एतत् नाम । एतस्य उभौ पादौ भवतः, तौ च दीर्घौ । दीर्घं पुच्छम् अपि भवति एतस्य । एतस्य पुच्छं शरीरस्य समतलस्थितिरक्षणे उपकरोति ।

एतस्य औन्नत्यं ३०. सें. मी. भवति । द्विपादमितं दैर्घ्यं कूर्दनेन क्रामति एषः । एतस्य नासिका दीर्घरन्ध्रोपेता । उच्छ्वसितस्य वायोः शीतलतां कल्पयति एषा । प्राणिनां शरीरे स्थितस्य जलांशस्य सङ्ग्रहे उपकारकं भवति एतस्य मूत्रकोषः । पूर्णोदरम् आहारं सेवित्वा अपि एषः आहारसेवनम् अस्थगयन् दन्तावल्याः पार्श्वे स्थिते चर्मकोषे सङ्गृह्णाति । ततः स्वस्य वासस्थलं गत्वा तम् आहारं चर्वन् उदरं प्रति प्रेषयति सः ।

# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवन्तः जानन्ति किम् ?

### 'रोस्'दिनम्

१९९४ तमे वर्षे फेब्रवरीमासस्य १४ दिनाङ्के ज्ञातं यत् त्रयोदशवर्षीया मेलिण्डा रोस् हेथवे विशिष्टेन अर्बुदरोगेण ग्रस्ता अस्ति इति । विरलैः एव प्राप्यमाणम् एतम् अर्बुदरोगं प्राप्य मेलिण्डा न भीता, न वा धैर्यच्युता । रोगः तस्याः जीवनोत्साहं नाशयितुं न अशक्नोत् । सा सङ्कल्पितवती यत् अर्बुदग्रस्तेषु बालेषु धैर्यम्, उत्साहः, आशाभावः च पूरणीयः इति । एतदर्थं सा पितुः साहाय्येन एकं जालपुटं सज्जीकृतवती । तत्र सा परिणता इव बहून् अंशान् योजितवती । आत्मानं रोगिणीं न भावितवती सा कदापि ।

मेलिण्डा १९९८तमे वर्षे सप्टम्बर्मासस्य १५ दिनाङ्के पञ्चदशे वयसि परं धाम श्रितवती । बहुषु बालेषु धैर्यं पूरयितुं शक्तवती सा । एतस्याः विशिष्टायाः बालिकायाः स्मरणार्थं अर्बुदचिकित्सालयाः अन्याः संस्थाः च रोस्दिनम् आचरन्ति ।



## अभिवर्ध्यतां ज्ञानशक्तिः

### विविधांशाधारिताः प्रश्नाः



१. बिष्णोय्-आन्दोलनं नाम किम् ?
अ) वृक्षपूजनसम्बद्धम्
आ) विष्णुभक्तिसम्बद्धम्
इ) समुद्रपूजासम्बद्धम्
ई) विष्णुमन्दिरयात्रासम्बद्धम्



२. शिलोद्यानं कुत्र अस्ति ?
अ) चन्दीगडे
आ) लुधियानायाम्
इ) सोनपेटप्रदेशे
ई) पानीपते



३. भारतीयारण्याधिनियमः कस्मिन् वर्षे पारितः ?
अ) १९२७ तमे वर्षे
आ) १९६७ तमे वर्षे
इ) १९०७ तमे वर्षे
ई) १९५७ तमे वर्षे



४. चिप्को-आन्दोलनं कदा आरब्धम् ?
अ) १९७३तमे वर्षे एप्रिल्मासे
आ) १९७२तमे वर्षे एप्रिल्मासे
इ) १९५३ तमे वर्षे एप्रिल्मासे
ई) १९९३ तमे वर्षे एप्रिल्मासे

(उत्तराणि ७० तमे पृष्ठे)

# चित्रशीर्षिकास्पर्धा



SPHOORTHY REDDY V.H.

अधस्तनं
चित्रद्वयं दृष्ट्वा
परस्परसम्बन्धिना
वाक्यद्वयेन
चित्रशीर्षिकां
किं भवन्तः
प्रेषयितुं
शक्नुयुः ?



MAHANTESH C. MORABAD

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू. १००/- पुरस्काररूपेण दास्यन्ते ।
पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

'फेब्रवरी'मासस्य चित्रशीर्षिकाप्रेषिका -
श्रीमती अनसूया जगदीश
'हरिपद्मनिलयः', चेळायिरु कालनी,
वया - हळेयङ्गडि,
**मङ्गलूरु - ५७४ १४६.**

पुरस्कृता शीर्षिका





विराजतां ललाटे तिलकम्
निनदतु जीवने मङ्गलरवः

## अभिवर्ध्यतां ज्ञानशक्तिः - उत्तराणि

१. वृक्षपूजनसम्बद्धम् ।
२. चन्दीगडे ।
३. १९२७ तमे वर्षे ।
४. १९७३ तमे वर्षे एप्रिल्मासे ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)

CHANDAMAMA (Sanskrit) APRIL 2005
Regd No. TN/PMG(CCR)-589/03-05
Regd. with Registrar of Newspaper for India No. 42664/85
Licensed to post without prepayment No. 371/03-05 Foreign - WPP. No. 372/03-05



# मार्गसुरक्षाविषये अवधानम्



वीणायाः सहपाठिनः सर्वे मार्गसुरक्षासप्ताहस्य अङ्गतया प्रवृत्तायां 'मार्गसुरक्षा'विषयकप्रबन्धस्पर्धायां भागं गृहीत-वन्तः । पारितोषिकवितरणदिनम् अपि आगतम् ।

नगरस्य आरक्षकाधीक्षकः निर्णायकेषु अन्यतमः आसीत् । सः छात्रान् उद्दिश्य अवदत् – ''भवद्भिः उत्तमतया एव लिखितम् । कः प्रबन्धः चेतव्यः इत्येव समस्या अस्माकम् । मार्गसुरक्षाविषये वाहनचालकैः पादचारिभिः च कथं व्यवहरणीयम् इति तु बहुभिः लिखितम् । किन्तु एकः एव प्रबन्धः तादृशः अस्ति, यत्र च पट्टिकासङ्केतविषये लिखितम् अस्ति'' इति ।

क्षणकालस्य विरामस्य अनन्तरं तेन कथनम् अनुवर्तितम् – ''पट्टिकासङ्केतः पादचारिणां सुरक्षायै आकल्प्यते । एषः सङ्केतः यदा दृश्यते तदा वाहनचालकाः वेगं न्यूनीकुर्युः । प्रबन्धे कश्चन प्रमुखः अंशः विशदीकृतः अस्ति यत् पट्टिकासङ्केतः यदा दृश्यते तदा अविचिन्त्य अग्रे न गन्तव्यम्, पार्श्वद्वये अपि दृष्ट्वा यानानां गमनागमनं न दृश्यते इति दृढीकृत्य एव क्रमणीयम् इति । अयि बालाः ! भवन्तः जानन्ति एव यत् केनचित् एकेन असावधानेन पादचारिणा कृतः प्रमादः मार्गे गन्तॄणां बहूनाम् अपायं कल्पयितुम् अपि अर्हति इति । महान् अपघातः अपि सम्भवेत् तेन । पादचारिणः रक्षणाय प्रयतमानेन यानचालकेन गमनस्य दिक् परिवर्तनीया भवेत् । तेन अन्यः घट्टितः स्यादपि । अतः सङ्केतपट्टिकाक्रमणसमये यानचालकः इव पादचारी अपि सावधानः भवेत् एव । वीणानामिकया विद्यार्थिन्या स्वस्य प्रबन्धे एते अंशाः विशदीकृताः सन्ति । अतः तस्यै प्रथमं पारितोषिकं दातव्यम् इति वयं निर्णायकाः सर्वानुमत्या निर्णीतवन्तः स्मः'' इति ।

पारितोषिकस्य स्वीकरणाय वीणा उत्थितवती । आश्चर्यपूर्णानि असंख्यानि नेत्राणि ताम् एव कुतूहलेन पश्यन्ति स्म ।